अथ

# श्रीमच्चन्द्रप्रभाचरितम्

परममाहेश्वरभट्टमाहेश्वरतनुजनुषा
शंकरलालेन निर्मितम्

तच्च तेनैव

श्रीसुदामपुरपुरंदरमहाराणाश्रीनटवरसिंहजी-
संमत्या परमपरोपकारिणां श्रीकैलास-
वासिनां महाराणाश्रीभावसिंहजी-
वर्मणां नामस्मरणाय

निर्णयसागरमुद्रणयन्त्रालये मुद्रापयित्वा प्रसिद्धिं नीतम् ।

संवद्वस्वङ्गनन्देन्दुमितवर्षीयाधिकाषाढपूर्णिमायां भृगौ ।



मूल्यं पादोनरूप्यकः ।



प्रतिपालक नेकनामदार कैलासवासी महाराणा श्री ७ भावसिंहजी साहेब बहादुर

# अर्पणपत्रम्

परमपवित्रपरोपकारपरायणांतःकरण गोब्राह्मणप्रति-
पालक महाराणा श्रीमद् भावसिंहनरेन्द्र!

शौर्यौदार्यदयादिसद्गुणमहारत्नैकरत्नाकर
श्रीमत्सांबशिवार्पिताचलमहाकैलासशैलास्पद ।
राणावंशमणे सुदामनगरीनाथ प्रजापालने
कारुण्यामृतपूरपूर्णहृदय श्रीभावसिंह प्रभो ॥ १ ॥
स्मारंस्मारमनन्यतुल्यमखिलं युष्मद्गुणानां गणं
वारंवारमनेकशोप्युपकृतीस्तास्ताश्च युष्मत्कृताः ।
युष्मभ्यं तु समर्प्य पुस्तकमिदं चंद्रप्रभाख्यं हृदा
स्वात्मानं कृतकृत्यमद्य मनुते राजञ्जनोयं सदा ॥ २ ॥
सेयं चंद्रप्रभा भूयाद्भवतां भवमन्दिरे ।
अमन्दानन्दसन्दोहवर्षिणी शिवसन्निधौ ॥ ३ ॥
चन्द्रप्रभाप्रभावेण स्वांते शांतेऽत्र यो नृणाम् ।
आह्लादो भविता कोपि स्वस्वधर्मप्रबोधजः ॥ ४ ॥
तज्जन्यागण्यपुण्यानां फलानि परमेश्वरः ।
श्रीमद्भ्योऽर्पयतु श्रीमानिति मे परमार्थना ॥ ५ ॥

कर्ता.

# अथ प्रशस्तिश्लोकाः

अस्ति स्वस्ति श्रीनिवासा सुदामनगरी शुभा ।
रम्यहर्म्यतलोत्तुंगाट्टालिकालिविराजिता ॥ १ ॥
निःसीमागाधगांभीर्यकृपामृतमहोदधेः ।
श्रीकृष्णस्य कृपालोकलहर्य्यर्पितवैभवा ॥ २ ॥
पश्चिमांभोनिधेस्तीरे परा द्वारवतीव या ।
नानासज्जनसद्रत्नैः सर्वतः समलङ्कृता ॥ ३ ॥
मयूरध्वजभूपालवंशीया वीर्यवत्तराः ।
जेठवाकुलभूपालाः पालयामासुरत्र ताम् ॥ ४ ॥

आसीद्राजा नयमयमनाः पञ्चमः खीमराजो
येन स्वीया हरिसखपुरे स्थापिता राजधानी ।
तत्पुत्रोभूदतुलितबलो विक्रमाजित्तृतीय-
स्तत्पुत्रोभूज्जगति शरतानाभिधो भूमिभर्ता ॥ ५ ॥

येनाकारि प्रणयनिधिना स्वाभिधो राजकुञ्जो
जीर्णोद्धारो महति सदने चापि कैदारनाथे ।
शौर्यौदार्यप्रणयनिलयो धीरधीर्वीरवर्यः
श्रीहालोजिस्तनुजनुरभूत्तस्य चाद्यो दयालुः ॥ ६ ॥

तत्पुत्रोभूदनुपमगुणः खीमराजश्च षष्ठ-
स्तत्पुत्रोभूत्परशिवपरो विक्रमाजिच्चतुर्थः ।
येनास्थापि प्रणयभरतो हंत भोजेश ईश-
स्तत्पुत्रोभूत्प्रणयमधुरो माधवो भूमिपालः ॥ ७ ॥

तत्पुत्रोऽभूद्भुवि सुविदितो भावसिंहो नृपालः
शौर्यौदार्याद्यखिलसुगुणैकार्णवः सद्गुणज्ञः ।

यस्यानेकान् शुभगुणगणान् सत्कवींद्रा नितांतं
गायं गायं प्रमितमतयो नैव पारं प्रयान्ति ॥ ८ ॥
माता यस्य प्रणयवसतिर्माजिराजाभिधाना
तातो यस्योत्तमगुणनिधिर्माधवो भूपसिंहः ।
शैवाग्रण्यः पितुरपि पिता विक्रमाजिद्यदीयः
सोऽयं कीर्त्याऽमर इह सदा भावसिंहो नृपालः ॥ ९ ॥

जन्मात्रासीन्निगमनयनांकक्षमा १९२४ संमितेव्दे
पौषे मासे प्रतिपदि गुरौ यस्य पक्षे वलक्षे ।
यो वाल्येपि प्रणयनिलयः शूरतौदार्यशाली, सोयं० ॥ १० ॥
विद्यां हृद्यां सदयहृदयात्सद्गुरोः प्राप्य सद्यः
कृत्वा देशाटनमपि मुदा प्राप्तनानानुभूतिः ।
तत्तद्देशस्थितगुणिगुणैर्यश्च मैत्र्या प्रबद्धः, सोयं० ॥ ११ ॥
मोरबीपुरनरेंद्रनंदिनी लख्तराधिपसुतां सुशीलिनीम् ।
भावपत्तनपुरंदरात्मजां रामबामखिलसद्गुणाश्रयाम् ॥ १२ ॥
सापराभिधपुराधिपात्मजां वीरपूर्वपुरनाथनंदिनीम् ।
यः क्रमेण परिणीय भूपतिः प्राप यः सुखपरंपरां पराम् ॥१३॥
शौर्यधैर्यनिलयोदयामयः सत्कवींद्रगणगीतसद्यशाः ।
भावसिंहनृपतिः प्रतापवान् सोयमस्ति यशसाऽजरामरः ॥ १४ ॥
यस्यौदार्यं निरुपमतमं गीयते गायकौघै-
र्यस्यौदार्यं भुवनविदितं श्लाघ्यते मेदिनींद्रैः ।
यस्यौदार्यं निरवधितमं वर्ण्यते सत्कवींद्रैः
सोयं कीर्त्याऽमर इह सदा भावसिंहो नृपालः ॥ १५ ॥

शौर्यं यस्य प्रणयवसतेर्निस्तुलं शूरगेयं
धैर्यं यस्योत्तमतममहो धीरवीरप्रवर्ण्यम् ।
गांभीर्यं चाप्यवधिरहितं यस्य गांभीर्यसिंधोः, सोयं० ॥ १६ ॥
पुंरत्नानां गुणगणवतां सत्परीक्षैकशक्तिः
कांता कांतं निजमिव सती हर्षतोयं नु वव्रे ।
धैर्यांभोधिर्गुणिगुणगणज्ञाग्रणी राजरत्नं, सोयं० ॥ १७ ॥
यस्मिन् याते शिवपदमितः पौषमासाद्यपक्षे
बाणाङ्गाङ्कावनि १९६५ परिमिते वत्सरे राजरत्ने ।
औदार्यांभोनिधिमनुपमं शुष्कमाहुः कवीन्द्राः, सोयं० ॥ १८ ॥
कृत्वा कृत्वा प्रियमनुपमं यः सदा मौनशीलो
दत्वा दत्वार्थितसमधिकं चार्थिने नात्तदर्पः ।
कृत्वाकृत्वा सहनमपराध्यंहसां निर्विकारः
सोयं कीर्त्याऽमर इह सदा भावसिंहो नृपालः ॥ १९ ॥
येनाजन्मत आपरेश्वरपदारोहं परौदार्यतः
कारङ्कारमिहोपकारनिकरानाराजरङ्कं नृणाम् ।
निर्मानेन मनस्विना शिवकृपादृक्पात्रतासादिता
सोयं सद्यशसाऽजरामर इह श्रीभावसिंहो नृपः ॥ २० ॥
अस्ति श्रीमान् भुवि नटवरः सिंह औदार्यसिंधु-
स्तत्पुत्रोपि स्मरहरकृपादृष्टिवृष्टिप्रपुष्टः ।
तं भूपालं हरिहरविरञ्च्यादयोऽवन्तु देवा
देव्यश्चापि प्रतिदिनमिति प्रार्थये श्रीमहेशम् ॥ २१ ॥
महाराजश्रीरवाजित्पाठशालैकशास्त्रिणः ।
इति शङ्करलालस्य प्रार्थना प्रतिशङ्करम् ॥ २२ ॥



दिन दिन प्रौढ प्रताप गोब्राह्मणप्रतिपालक नेकनामदार
महाराणा श्री ७ नटवरसिंहजी साहेब बहादुर.

॥ श्रीराजराजेश्वरो जयति ॥

# प्रस्तावना.

यां विनानैकमर्द्धं वाप्यक्षरं लिखितुं जनः ।
शक्तस्तामीशकरुणामनुक्षणमुपास्महे ॥ १ ॥

शौर्यौदार्यदयादिसद्गुणगणागारेण राणाकुला-
लङ्कारेण च भावसिंहविभुनाहूतो जनोयं मुदा ।
वर्षे नेत्ररसाङ्कभू १९६२ परिमिते मासे शुभे माधवे
शुक्लेऽनन्ततिथौ सुदामनगरं प्राप्तः प्रभोराज्ञया ॥ २ ॥

तदैव सायंसमये दयालोर्जातं हि मे दर्शनमुर्वरेंदोः ।
औदार्यधाम्नोऽतुलशौर्यसीम्नः श्रीभावसिंहस्य पवित्रनाम्नः ॥ ३ ॥

प्रथमपरिचयेऽपि मामनन्यं स्वजनमवेत्य दयामयाशयेन ।
सपदि वितरता सहैव देव्या निजशुभदर्शनमप्यनन्यलभ्यम् ॥ ४ ॥

मयि निजममता कृपा च पूर्णाऽप्रतिमतमा प्रभुणा प्रदर्शिता या ।
कथमिव ननु विस्मरामि तां तामतुलतमाञ्च तदीयसद्गुणालीम् ॥ ५ ॥

पतिव्रताधर्मनिबद्धबुद्ध्या श्रीरामबासंज्ञिकया सुराज्ञ्या ।
कुमारमात्रा प्रणयेन भक्त्या तदाग्रहीतानि सुपुस्तकानि ॥ ६ ॥

मन्निर्मितान्यादरतोऽखिलानि चन्द्रप्रभां तेष्वथ नावलोक्य ।
पप्रच्छ मां भूपतिरत्र हेतुं श्रीभावसिंहः प्रणयामृताब्धिः ॥ ७ ॥

दयापयोधे नरपाल तस्या अखण्डसौभाग्यसमृद्धिभाजः ।
श्रीमोरबीभूपरवाजिपुत्र्याः श्रीवख्तुबायास्तवधर्मपत्न्याः ॥ ८ ॥

मुद्रापितायाः स्मरणार्थमेव चन्द्रप्रभायाः प्रतिरद्य नास्ति ।
एकापि शेषेति निशम्य वाक्यमौदार्यसिन्धुः स नरेन्द्रधुर्यः ॥ ९ ॥

भूयोऽपि मुद्रापयितुं सभाषान्तरां च तां मन्त्रिणमादिदेश ।
सविघ्नजालानि शुभानि कार्याण्येषा जनोक्तिर्न मृषेति मन्ये ॥ १० ॥

क्वमुद्रितायामनुकूलता स्यात्क्वशुद्धता वा क्वमनोज्ञता वा ।
द्वित्राणि वर्षाणि गतानि यावच्चन्द्रप्रभामुद्रणचिन्तयैवम् ॥ ११ ॥

तावन्नृपालामलरत्नमालामहामणिः श्रीयुतभावसिंहः ।
कैलासशैलातिथितां प्रयातः पुण्यैरगण्यैः स महेशभक्तः ॥ १२ ॥

शुष्कः शौर्यैकसिन्धुर्नृपतिगुणमहारत्नकोषो विशीर्णो
धर्मस्तंम्भः प्रभग्नः कविवरविदुषां कल्पवृक्षः प्रणष्टः ।
रङ्कानां चापि राज्ञामपि परमविपत्कालमित्रे पवित्रे
श्रीकैलासं सुदाम्नो नगरनरपतौ भावसिंहे प्रयाते ॥ १३ ॥

चन्द्रप्रभामुद्रणगा मदाशा भग्नाखिलोदारमणौ नरेन्द्रे ।
श्रीभावसिंहे शिवभक्तवर्ये श्रीशंभुलोकं सुकृतैः प्रयाते ॥ १४ ॥

अथ नटवरसिंहस्याथ तद्राज्यलक्ष्म्या अवनमिह विधातुं सार्वभौमैः प्रयुक्तः।
नृपतिरतिविवेकी वाजशूराभिधानो नयमयहृदयः कल्याणरायश्च वक्षी १५

ताभ्यामुभाभ्यां नृपभावसिंहस्येच्छां विदित्वा विमलां विशुद्धाम् ।
चन्द्रप्रभामुद्रण आशु दत्तं साहाय्यमग्र्यं गुणसागराभ्याम् ॥ १६ ॥

साहाय्यमालम्ब्य च तत्कृतं तच्चंद्रप्रभायास्तु मया द्वितीया ।
आवृत्तिरुर्वीरमणैकरत्नश्रीभावसिंहस्मृतयेंकितेयम् ॥ १७ ॥

विलोक्य तां यो हृदये प्रमोदो धर्मोदयो वा विनयोदयो वा ।
भवेन्नराणामिह तत्फलानि प्राप्नोतु सर्वाणि शिवप्रसादात् ॥ १८ ॥
राणाकुलालंकरणं नरेन्द्रः श्रीभावसिंहः शिवलोकवासी ।
इत्यर्थये श्रीगिरिजासहायं श्रीमन्महेशं प्रणयप्रणम्रः ॥ १९ ॥
जयतु जयतु बाश्रीरामबाराजमाता स च नटवरसिंहः श्रीसुदामापुरीन्द्रः ।
नरपतिहितयुक्तः सार्वभौमप्रयुक्तो नृपतिरिह स बक्षी बाजशूराभिधश्च ॥२०॥
भवतु च सकलानां श्रेय एवात्र तेषामनुदिनमनुवेलं श्रीमहेशप्रसादात् ।
अतुलतरमवर्ण्यं यैः सहायप्रदानं कृतमिह मुहुरेतत्प्रार्थये श्रीमहेशम् ॥२१॥

कर्ता.

श्री राजराजेश्वरो जयति ।

# ॥ श्रीसद्गुरुस्तुतिः ॥

ये श्रीशैलसुतायुतार्धवपुषः श्रीचन्द्रचूडामणेः, पादाम्भोरुहसेवनाप्तसकलाभीष्टार्थसंसिद्धयः । निःसीमप्रणया दयार्द्रहृदयाः सौशील्यलीलालयास्ते श्रीकेशववैदेशिका मयि सदा सन्तु प्रसादोन्मुखाः ॥ १ ॥ येषां जन्म रसर्षिनागवसुधा [ १८७६ ] संख्ये शुभे वत्सरे कृष्णाष्टम्यरविन्दबान्धवदिने मास्याश्विने चोत्तमे । ज्योतिर्विज्ञमुराररितातचरणेभ्योभूत्सुपुण्यात्मनां ते श्रीकेशव० ॥ २ ॥ यैराजन्मत आपरेश्वरपदारोहं गिरीन्द्रात्मजाप्राणाधीशपदाम्बुजं परमया भक्त्या समाराधितम् । पूर्णानन्ददयालुदैशिकदयादृक्पात्रता चार्जिता ते श्रीकेशव० ॥ ३ ॥ ताताचार्यसविठ्ठलाह्वयबुधश्रीकृष्णभट्टादिमान् प्रेम्णाराध्य गुरून् दयार्द्रहृदयान् यैस्तद्दयावृष्टिभिः । विद्याकल्पलता महाफलनताः स्वान्तालवाले धृतास्ते श्रीकेशव० ॥ ४ ॥ ये श्रीमत्फणिराजराजफणितिप्राग्भारपारंगमा ये श्रीमत्कणभुक्पदेक्षणमुनीन्द्रोक्त्यब्धिमग्नाशयाः । ये श्रीमन्निगमान्तशास्त्रसरणीसर्वस्वसंसेविनस्ते श्रीकेशव० ॥ ५ ॥ यज्जिह्वा निगमागमामलगिरां सन्नृत्यशालायते गोनर्दीयवरोक्तिरम्यलतिकाजालालवालायते । नानासत्कविताच्छकल्पलतिकाबालप्रवालायते ते श्रीकेश० ॥ ६ ॥ नानाशास्त्रसरोजराजिरुचिरे श्रीशैलजाश्रीशयोरम्भःकेलितरत्तरंगिणि दयापीयूषपूर्णेभितः । वागीशा कुरुते विहारमनिशं हंसीव यन्मानसे ते श्रीकेशव० ॥ ७ ॥ ये भाट्टे पटुदर्शनेऽप्रतिभटाः प्राभाकरे सप्रभाः काणादाक्षपदोक्तियुक्तिकुशला वेदान्तहार्दस्पृशः । जिह्वाग्रीकृतशेषगुम्फितगिरो ज्योतिःसुपारंगमास्ते श्रीकेशव० ॥ ८ ॥ विद्वांसः शतशो लसन्ति शतशः शास्त्रज्ञताशालिनः साहित्याम्बुधिपारगाश्च शतशो ज्योतिर्विदोऽनेकेशः । सौराष्ट्रे सुकवीश्वराश्च शतशो येषां प्रभावादमी ते श्रीकेशव० ॥ ९ ॥ ये सौशिल्यसुधाब्धयः सुकवितासंकल्पकल्पद्रुमाः श्रीगौरीहृदयेश्वरप्रणयिताक्रीडानिकुञ्जाश्च ये । येषां स्वान्तसरोवरैकवसतिर्वाग्देवताभूच्चिरं ते श्रीकेशववैदेशिका मयि सदा सन्तु प्रसादो-

न्मुखाः ॥ १० ॥ वागीशाभवनायमानहृदयैर्यैः सुज्ञतायुष्मती विद्वद्रत्नमहाकरश्च निखिलः सौराष्ट्रदेशोपि यैः । यैश्चावां करुणार्द्रताचरणाम्भोजस्य विस्मारितौ ते श्रीकेशव० ॥ ११ ॥ अल्पप्रज्ञमपि क्षणेन सुमनःश्लाघ्यं विधातुं क्षमा निःसीमानुपमप्रसादसरसा येषां दयार्द्रा दृशः । प्राकारा इव मानवाकृतिधरा वाग्देवतायाश्च ये ते श्रीकेशव० ॥ १२ ॥ येषां स्वान्तनिकुञ्जसद्मनि लसत्कारुण्यलीलांशुके सौशील्यार्जवशास्त्रवित्त्वकविताकौशल्यरत्नोज्ज्वले । वागीशा वसतिं चकार विमले प्रेमामृतैः सिंचिते ते श्रीकेशव० ॥ १३ ॥ ये मुन्यग्निरसोर्वरा [ १९३७ ] परिमितेब्दे मासि चैत्रे दले कृष्णे श्रीगिरिजाहृदीशहृदयालम्बा दशम्यां शनौ । मध्यान्हे परमेश्वरे परशिवे सायुज्यमुक्तिं गतास्ते श्रीकेशव० ॥ १४ ॥ संप्राप्तेषु च येषु शंभुदयया कैलासशैलालयं संशुष्को निगमागमामलमहारत्नैकरत्नाकरः । विद्याकल्पलताश्रयश्च पतितः सा सुज्ञता हा हता ते श्रीकेशवदेशिका० ॥१५॥ निर्विश्राममधःप्रदेशनिपतत्स्वर्लोककल्लोलिनीकल्लोलैकसहोदराः सुरगिरां ते केपि सूक्तिक्रमाः। येषु श्रीगिरिजाहृदीश्वरपदं प्राप्तेष्विहास्तंगतास्ते श्रीकेशव० ॥ १६ ॥ नानापण्डितमण्डितापि सकला सौराष्ट्रदेशावनिर्हाहा संप्रति रण्डतेव परितः शून्येव चालक्ष्यते । संप्राप्तेषु च येष्वहो परशिवे सायुज्यमुक्तिश्रियं ते श्रीकेशव० ॥ १७ ॥ येषां दिक्षु विदिक्षु निर्मलतराः शास्त्रज्ञताकीर्तयो निस्तन्द्रा इव चन्द्रिका जनमनश्चन्द्रोपलोल्लासदाः । साल्हादा रचयन्त्यनुक्षणमलं विद्वच्चकोरावलीस्ते श्रीकेशव० ॥ १८ ॥ येभ्यः शास्त्रसुधाम्बुधिभ्य इतरे संपाद्य विद्यामृतं संप्राप्तोन्नतयो लसन्ति शतशः शास्त्रज्ञधाराधराः । विद्यावृष्टिमनुत्तमामविरतं वर्षन्त आर्द्राशयास्ते श्रीकेशव० ॥ १९ ॥ आबाल्याद्गुरुदैवते गुरुकृपापात्रे जटाशंकरे बाले शंकरलालनाम्न्यपि मयि स्वीये च धर्मात्मजे । वात्सल्यामृतवर्षिणः प्रतिदिनं पूर्णप्रसादोन्मुखाः सन्तु श्रीगुरुकेशवेशचरणाः कैलासशैलाश्रयाः ॥ २० ॥

---

# अर्पणपत्रं प्रथमावृत्तेः ।



हे श्रीव्याघ्रजिदुर्वरावर दयादाक्षिण्यरत्नाकर
प्रोत्साहैकमहोदधे प्रतिदिनं स्वीयप्रजापोषक ।
सद्बोधप्रदनीतिवर्धक जगच्छ्रेयस्करेष्वस्ति ते
सत्प्रीतिर्वरपुस्तकेष्वपि च तद्वृद्धिं समाकाङ्क्षसि ॥ १ ॥
दृष्ट्वा तानि च तादृशानि परमानन्दामृताम्भोनिधौ
मग्नस्वांत इवार्पयस्यनुदिनं साहाय्यकं तत्कृतौ ।
विद्याकल्पलतां च वाञ्छसि सदा सर्वत्र देशे निजे
प्रेम्णा पल्लवितां तथा कुसुमितां हृद्यैः फलैश्चानताम् ॥ २ ॥
सद्विद्यार्पणपुण्यवर्णनपरं तस्मादिदं पुस्तकं
युष्मन्मातुरनुज्ञया विरचितं श्रीमोविबाया मया ।
तन्नामस्मृतये च भूमिरमण प्रेम्णा सुमुद्रापितम्
युष्मभ्यं प्रणयात्समर्प्य सफलं मन्ये स्वकीयं श्रमम् ॥ ३ ॥
महाराजश्रीरवाजिपाठशालैकशास्त्रिणः ।
इति शंकरलालस्य विज्ञप्तिः प्रति भूपतिम् ॥ ४ ॥

# प्रथमावृत्तेः प्रस्तावना।

यस्या जन्म शशांकनन्दवसुभू [ १८९१ ] संख्ये शुभे वत्सरे, मासे भाद्रपदे दले च धवले जातं तृतीये तिथौ। वारे सूर्यसुतस्य भूपतिवरश्रीराजसिंहालये, श्रीचूडानगरे समस्तसुहृदामानंदसंदोहदम् ॥ १ ॥ बाल्यादेव च या परेश्वरपरस्वान्ता प्रशान्ताशया, सौशील्यप्रणयार्जवादिसुगुणाभूषाभिराभूषिता। धैर्यौदार्यदयामयाच्छहृदया सद्धर्मकर्मप्रिया, स्वीयैः सच्चरितैः समस्तजनताहर्षप्रवर्षिण्यभूत् ॥ २ ॥ करसरसिजयोगं श्रीरवाजिक्षितीन्दोर्गुणगगननवक्ष्मा [ १९०३ ] संमिते प्राप्य वर्षे ॥ नयमयनयना या मोंघिबा पट्टराज्ञी सदयहृदयवृत्तिः स्वप्रजायां बभूव ॥ ३ ॥ निखिलपुरवरश्रीमोरबीपूर्महेन्द्रं नरपतिमणिमालानायकं श्रीरवाजिम्। हृदयदयितमाप्योमाहृदीशप्रसादात्, परमसुखसुधाब्धौ याऽभवन्मग्नचित्ता ॥ ४ ॥ अनुदिनमनुवेलं स्वप्रजासूपकारान्, प्रणयपरवशा यानेकशश्चात्र चक्रे। निजपतिपदभक्त्या प्राप्य सौख्यान्यसंख्यान्यपि च न मदलेशं या हृदि स्वे दधार ॥ ५ ॥ प्रणयवशरवाजिक्ष्मापतिप्राणतुल्या निगमशशिनवक्ष्मा [ १९१४ ] संमितेब्दे शुभे या। शुभगणपचतुर्थ्यां माधवे संप्रसूता निखिलगुणनिधानं व्याघ्रजित्पुत्ररत्नम् ॥ ६ ॥ पुत्रं श्रीहरभीमसिंहमपरं श्रीवख्तुबाख्यावतीं सत्पुत्रीं च ततः प्रसूय समभूद्यारत्नसूस्तद्गुणैः। या चानन्दपरंपरा इह पराः प्रेमामृतार्द्राशयस्वप्राणेशरवाजिराजकरुणालोकैः सदैवान्वभूत् ॥ ७ ॥ रसनयननवक्ष्मा [ १९२६ ] संमितेब्दे च मासे तपसि धवलषष्ठयां दुःखदे चार्कवारे ॥ शिवपदमुपयाते श्रीरवाजिक्षितीन्दौ निरवधिविपदब्धौ या निमग्नाशयाभूत् ॥ ८ ॥ तदनु सदनुरागात्प्राणबंधौ स्वकीये सुखमखिलमपास्यानुत्तमं राज्यजन्यम्। निजपति शुभलोकप्राप्तये श्रीशभक्तिं प्रतिदिनमकरोद्या निस्तुलां निश्चलां च ॥ ९ ॥

कति कति न निजेशस्योदयास्यै परत्र प्रणयपरवशा सा धर्मकर्माण्यकार्षीत् । अजरममरमात्मप्राणनाथाभिधानं कृतमिह तु यया तैस्तैरगण्यैः स्वपुण्यैः ॥१०॥ गुणनयननवक्ष्मा [१९२३]संमिताब्दोर्जमासे परदलगततृतीया शुक्रवारे यदीयं । जनुरभवदमन्दानन्दसंदोहदं या नयविनयविवेकौदार्यधैर्यैकधुर्या ॥ ११ ॥ सकलशुभगुणानामेकपात्रं सुशीलस्थलमनुपमपातिव्रत्यविश्रामभूमिः । हरिहरचरणाब्जद्वन्द्वभक्त्येकचित्ता निरुपमतमसौजन्यातिधन्या च याभूत् ॥१२॥ गगननिगमनन्दक्ष्मा [१९४०] मिते वत्सरे भूद्ध्वलदलदशम्यां माधवे मासि यस्याः । इह सह सुविवाहः श्रीसुदामाख्यपुर्य्यां नृपकुलजनिभाजा भावसिंहाभिधेन ॥ १३ ॥ अपरमिव च यस्या जीवितं वत्सुबा सा नयननिगमनन्दक्ष्मा [ १९४२ ] मितेब्दे च शुक्ले । असितदलदशम्यां चन्द्रवारे प्रयाता शिवपदमिति वार्ता वज्रपातोपमाभूत् ॥१४॥ जगदिदमिव शून्यं मन्यमाना विना तं निजपतिमतिपुण्यं तां विना चात्मपुत्रीम् । विविधविभवसंपन्निस्पृहा तीर्थयात्रां हरिहरनिजकांतस्वांतवृत्तिश्चकार ॥ १५ ॥ प्रतिसकलसुतीर्थं स्नानदानादिभिर्या निजपतिनिजपुत्र्योः श्रेय एवाचरन्ती । प्रतिहरिहरदेवं प्रार्थयन्ती तदेव क्षयमखिलमपि स्वं शेषमायुर्निनाय ॥ १६ ॥ पुनरपि च सुतीर्थान्येव तानि प्रमोदादचलविमलभक्त्या सेवितुं काङ्क्षमाणा । स्वकुलसकलदेवान् संप्रणम्यात्मजेन प्रणयभरनतेनोत्साहिता संप्रतस्थे ॥ १७ ॥ श्रीनाथं प्रथमं स्वदैवतममन्दानन्दकन्दप्रदम्,संसेव्यानुदिनं कृतार्थहृदया या रम्यभूषांबरैः। गत्वा श्रीमथुरां विगाह्य यमुनां देवान् समर्च्याखिलान्, कृत्वा पुण्यशतानि चेश्वरपरा गोलोकवासिन्यभूत् ॥ १८ ॥ मुनिनिगमनवक्ष्मा [ १९४७ ] संमितेब्देऽर्कवारे परदलगतषष्ठ्यां मासि चाषाढसंज्ञे । नृपतिमणिरवाजिद्धर्मपत्नी प्रयाता स्वकृतसुकृतपुञ्जैर्मोघिबा शंभुलोकम् ॥ १९ ॥ निजपतिपदभक्तिर्निर्व्यलीका गता सा सदयहृदयतापि क्वा पि सा हन्त लीना । विलयमुपगता काप्यद्भुतोदारता सा हरिहरि हरिलोकं मोघिबायां गतायाम् ॥ २० ॥ अयि विनयविवेकौ हा निरालम्बनौ स्थः सुकृतकृतयुगीयं हा गतं तेद्य सौ-

ख्यम् । शुभगुणगणरत्नान्याकरो वोद्य शुष्को हरिहरि हरिलोकं मोंघिबायां गतायाम् ॥ २१ ॥ मृदुलमधुरशब्दा वत्सलत्वामृतार्द्रा नयविनयविचित्रा हाद्य सासा हितोक्तिः । श्रवणयुगलपेया कुत्र कस्याः परस्या, हरिहरि हरिलोकं० ॥२२॥ हरिहरपतिभक्तिः सातिशुद्धास्तभेदा सह सहजसुशीलौदार्यधैर्यार्जवैर्हा । वसतिमिह हृदब्जे हंत कर्ताद्य कस्या, हरिहरि हरिलोकं० ॥ २३ ॥ सौहार्दं सहजन्म तत्प्रणयिता सा सौम्यता नम्रता सा सा वत्सलता च सा सदयता सा श्रीशसेवारुचिः । गन्तारः क्व गताश्रयाः शुभगुणा एते तदेकास्पदं हाहा हन्त यदद्य शंकरपदं श्रीमोंघिबा गच्छति ॥ २४ ॥ भक्तिः स्वप्रियपादपद्मयुगलालम्बा हता सा च सा नष्टा संप्रति सुज्ञता सुजनता सा सा च पुण्यात्मता । क्षोणीपालमणे खाजिनृपतेः सा धर्मपत्नी प्रिया हाहा हन्त यदद्य शंकरगिरिं श्रीमोंघिबा गच्छति ॥ २५ ॥ धर्मस्तम्भो विशीर्णो नयविनयदयौदार्यसौधो विदीर्णो, नष्टा सौशील्यशाला प्रलयमुपगता चार्थिनां कल्पवल्ली । सर्वस्वं सत्प्रजानां गतमवनिपतेर्दैवतं तत्तिरोभूत्पुण्यैस्तैस्तैरगण्यैः शिवशिव शिवतां मोंघिबायां गतायाम् ॥ २६ ॥ अनुदिनमिति सर्वैस्तद्गुणज्ञैः कवीन्द्रैर्गुणिभिरिह च यस्याः कीर्तिराप्तैश्च सद्भिः । अविरलगलदस्रासारमोदास्यलीनैः पुलककुलयुताङ्गैर्गीयते राजमातुः ॥ २७ ॥ तस्याः श्रीमोंघिबाया नयविनयनिधेः श्रीखाजिक्षितीन्दोस्तस्याः श्रीवख्तुबाया अपि च शुचितमान्यत्र नामानि भक्त्या । आकल्पस्थानि कर्तुं तदुपकृतिशतक्रीतचित्तस्तदाख्याः संयोज्यास्मिंश्चरित्रे कृतिनमिव ममात्मानमत्राभिमन्ये ॥ २८ ॥ चन्द्रप्रभापरिचयात्कमपि प्रमोदं यं प्राप्नुयुः सहृदयाः सदयाः पृथिव्याम् । तज्जन्यपुण्यफलमर्पयतात्परेशः श्रीमद्खाजिमनुजेश्वरधर्मपत्न्यै॥२९॥

महाराजश्रीखाजिपाठशालैकशास्त्रिणः ।

इति शंकरलालस्य प्रार्थना प्रति शंकरम् ॥ ३० ॥

---

## श्लोक.

चन्द्रप्रभाप्रभावज्ञाः पञ्चैव पृथिवीतले ॥
जीवंजीवा बुधा वैद्याः शत्रुशल्यश्च शंकरः ॥ १ ।



## श्रीरस्त्वत्र.

धन्या बुधा भवतु मान्या कथा सकलजन्या मनःप्रणयिनी
नान्याऽनया समपदं न्यासमेकमपि सन्न्यायबुद्धिषु भजेत् ।
कन्या कुलस्य तु विहन्याद्दयामयजनन्या समेयमपथम्
तन्न्यायविन्मतिषु जन्यादुमापतिरनन्यां सहायरचनाम् ॥ १ ॥

श्रीरामकृष्णशास्त्रिणां श्रीचन्द्रप्रभाविषयकोयमभिप्रायोद्गारः
सं. १९६७ मार्गशीर्षे शुदी १२ मङ्गले राजनगरे

अहम्मदाबाद )

॥ श्रीविघ्नहर्त्रे नमः ॥

# ॥ चन्द्रप्रभाचरितम् ॥



श्रेयः श्रीराजराजेशो देवदेवो ददातु नः ।
यद्दयालोकनाल्लेभे कुबेरो राजराजताम् ॥ १ ॥
मयि वितरतु वाचामीश्वरी प्रेमपूर्णा
दृशमथ गुरुवर्याः सन्तु पूर्णप्रसादाः ।
स्मरहरपुरवासास्तातपादास्तथा मे
यदनुपमदयादृग्लेशसर्वस्वता मे ॥ २ ॥

अयि भगवंश्चन्द्रचूडामणे !

अथापरेद्युः पश्चिमदिग्ललनाललामलीलामनुशीलयति सरससरोजिनीजीवनसर्वस्वे निःशेषभुवनभूषणायमानरश्मिमाले भगवति रश्मिमालिनि मन्दतामुपगतायामातपतीव्रतायां सुरपुरनिर्झरिणीशिशिरतरसीकरनिकरभरादिव मन्दमन्दमुपसरति सायंसमयसमीरे प्रसरति परितः समासीनसंध्यासमकालविदलत्कैरवकुलकुड्मलदलपरिमले शैलराजतनयामुखेन्दुमण्डलगलत्सुभाषितामृतरसलिप्सयाऽहंपूर्विकागताभिः सुरासुरोरगयक्षरक्षोगन्धर्वमुनिमनुजेन्द्राणां पवित्रचरित्राभिः कामिनीभिः कन्याभिश्च परितः सङ्कीर्णे स्फटिकमणिमये सभामण्डपे स्वं स्वं सिंहासनमलंकुर्वन्तीषु भगवतीषु लोपामुद्रानसूयाप्रमुखासु महासतीषु भगवत्या लोपामुद्राया अनसूयायाश्चात्याग्रहेण सभाध्यक्षसिंहासनं समलङ्कृतवत्यां भगवत्यामरुन्धत्यां मन्त्रिपदारूढायां च हिमाचलमहेलायां मेनायां एकावधानतया

च चित्रलिखितायामिव निश्चलतमायामखिलायां सभायां श्रीपार्वतीमुखकमलग-लन्मृदुलतरभाषणमकरन्दास्वादलोलुपतया सद्यो भाषणारम्भमाकाङ्क्षन्तीषु सर्वासु सतीषु सुवर्णसिंहासनगतनानामणिगणमरीचिमञ्जरीरञ्जितवल्कलाञ्चला भगवत्यरुन्धती समुत्थायात्मासिंहासनात् वत्से मेनामनोविश्रामकल्पलते हिमाचलकुलालङ्कारसारगुणे गौरि ! श्रावं श्रावं त्वन्मुखकमलाद्बहूनि चित्राणि पवित्राणि च सतीजनचरित्राणि न खल्वमूषां सभासदां कुलकामिनीनां प्रशान्तानि पातिव्रत्यकान्तानि स्वान्तानि तृप्तिमुपगच्छन्ति । को हि बुधः सुधास्वादाद्विरतिमुपेयात् । प्रतिदिनमधिकाधिकरसवन्त्यगण्यगुणगणविलसन्ति नानालङ्कारसारभास्वन्ति निर्दोषलेशान्यगर्वावेशानि प्रत्यक्षरमुल्लसन्निगमागमनिदेशानि च ते भाषणानि श्रुतान्यस्माभिः । सांप्रतं तु भगवत्योऽनसूयालोपामुद्राप्रमुखा इमा महासत्यो वत्सायाः कल्पनाशक्तिं परीक्षितुं वत्सयेदानीमेव सद्यः कल्पितमनितिहासभाषितमपुराणपठितमकथाकथानककथितमरूपकनिरूपितमकाव्यकल्पनाकल्पितं रसवद्गुणवत्सदुपदेशवच्च किमपि भाषणं श्रोतुमिच्छन्ति । तदद्य विधाय तादृशमभिनवमद्भुतकथाभूषणं भाषणं रञ्जयिष्यसि सभासमागतानाममूषां पातिव्रत्यवसतीनां सतीनां मनांसीत्याशासे । इत्युक्त्वा विरतायां भगवत्यामरुन्धत्यां समुत्थाय कुमारिकासमूहादद्रिराजतनया दयामयाशये मातररुन्धति ! यथाज्ञा भगवत्यास्तथा यथामदीयाल्पप्रज्ञाप्रसरं प्रयतिष्ये । प्रयत्नसाफल्यं तु भगवत्या अमूषां च महासतीनां कृपाकटाक्षवीक्षणसापेक्षमेव । यतो नीरसमपि सरसं निर्गुणमपि सगुणं निरलङ्कारमपि सालङ्कारमसहृदयहृदयाह्लादकमपि सहृदयहृदयाह्लादकं भवति वचोवृन्दममन्दमतिमतीनां सौशील्यवसतीनां भवादृशीनां महासतीनां दयामृतमयावलोकलहरीभिरिति केषामविदितमित्युक्त्वा क्षणं निमील्य नेत्रे ध्यात्वा वागीश्वरीदेशिकवरौ कृत्वा च प्रणामान् सर्वाभ्यो महासतीभ्यः प्रवक्तुमारभत ।

प्रियस्वसारो मे! अस्ति समस्तवसुमतीमस्तकालङ्कारभूतं सकलसंसारसारभूतं विविधविभवविहाराधारभूतं सुरपुरसमृद्धिप्रतिस्पर्द्धिमहर्द्धिमन्महामन्दिरावलीसुन्दरं स्वधर्मसत्कर्मतत्परान्तःकरणचातुर्वर्ण्यनिवासातिवर्ण्यमवर्ण्यमहीमहेन्द्रमुखचन्द्रलावण्यमापीयापीय चक्षुश्चषकरमन्दानन्दसंदोहमग्नाखिललोकमस्तोकमशोकमनुदिनमेधमानदेवभूदेवकुलसन्मानसोदयं मानसोदयं नामातिरमणीयं नगरम् । तच्च शासतिस्म सकलकलाकलापकुशलः काव्यशास्त्रनाटकरसाद्यभिज्ञोऽनभिज्ञो दुर्नयानां विज्ञो विनयानां कृतिज्ञोऽखिलराजकृत्यानां मतिज्ञोऽखिलमतिमदग्रेसराणां राजनीतिराजीविनीराजहंसो विहितवैरिवनविध्वंसो विभूषितनिजवंशो मूर्तिमानंशइवाखिललोकपालानामनुदिनमव्यलीकभक्तिभरसमर्चितचन्द्रचूडचरणनखचिन्तामणिगणपरिपूरितनिःशेषमनोभिलाषोऽप्रतिमप्रजाप्रियहितेच्छुतानन्यसमसमदृष्टितानैसर्गिकमहाशयतादिसद्गुणगणसमधिगतशिवप्रसादः शिवप्रसाद इव मूर्तः शिवप्रसादनामा महीमहेन्द्रः । अमात्यपदमलंचक्रतुश्च तस्य नयजयाविव मूर्तौ विनयाभ्युदयाविव नराकारौ शमदमाविव देहवन्तौ ज़गत्प्रख्याताप्रतिमविद्वत्तौ राजहितकार्येष्वजस्त्रमप्रमत्तौ राजाज्ञायत्तौ श्लाघनीयवृत्तौ शिवदत्तशंभुदत्तौ नाम ब्रह्माणौ । ताभ्यां सह स महाराजः प्रजानुरञ्जनपरायणान्तःकरण औरसतनयनिर्विशेषं प्रजापालनलालनपोषणचणः क्षणमपि न प्रजाप्रियहितविचारव्यतिरिक्तं निर्गमयामास । विधाय विधाय चानुदिनमात्ममनसि निजप्रजाप्रियहिताभ्युदयकरान् सद्विचारान् परमप्रियाभ्यां ताभ्याममात्याभ्यां श्रावयामास श्रावं श्रावं च तौ तांस्तान् सद्विचारान् सानन्दाश्चर्यं तदनुसारेणैव सर्वाणि राजकार्याणि चक्रतुः । तेन प्रजासु निःसीमानि सुखानि निरवधय आनन्दा अप्रतिमाश्चाभ्युदया अनुदिनमेधांबभूवुः । न तत्प्रजा राजतः प्रजादुःखमनुभवतीति स्वप्नेप्यज्ञासीत् । न तत्प्रजा राजतः प्रजाभयमनुभवतीत्यवेदीत् । न च तत्प्रजा राजतः प्रजा भर्त्सनोद्वेगविषादानादरा-

दीननुभवतीत्यबोधीत् । केवलं सौराज्यसुखपरंपराभिज्ञा लीलाविजितसकलराजनि तस्मिन् राजनि पितृनिर्विशेषां निर्व्यलीकां भक्तिमुद्वहन्ती राज्ञः प्रियाणि हितानि चाकाङ्क्षन्ती सुखमयानानन्दमयानुत्सवमयांश्च वासरनिचयान् निर्गमयामास । अवनिवनिताप्राणनाथोपि च तस्यां पुत्रनिर्विशेषमजस्रमनुघस्रं स्निह्यन् नलनहुषशर्यातिमान्धात्रलर्कादीन् प्राक्तनानप्युर्वीपतीन् स्वाभाविकैः स्वैः सद्गुणगणैर्विस्मारयामास । इत्थमहीनसत्वतया महीमिमां शतंसमा अनन्यसमानशौर्यौदार्यदयोदयः समहीमहेलः सहेलं परिपालयन् विलोक्यात्मवपुषो जराजीर्णतां विरक्तो विषयसुखेभ्यः समस्तवसुमतीभारं समर्प्याशेषसद्गुणगणरत्नरत्नाकरायात्मजरत्नाय निश्चिन्तचित्तः परमशिवसमर्चनपरायणान्तःकरणो बभूव । जराजीर्णतरशरीरौ शिवदत्तशंभुदत्तौ च निजात्मजरत्नाभ्यां समर्प्य सर्वं राज्यभारं समुचितज्ञानामग्रेसरेणात्मस्वामिना समाश्रितं निस्तापं निर्भयं सुखमयं च सन्मार्गमेवाविलम्बितमवललम्बाते । अन्येद्युश्च व्यभिचारिणां यशसीव निष्प्रभतामालम्ब्यमाने शशिनि व्यसनिनां गुणेष्विव क्रमशः पलायमानेषु तारानिकरेषु नीचानां संपदीवानुक्षणं क्षीयमाणायां क्षपायां सलोभानां शोभास्विव म्लानिमुपगच्छन्तीषु कैरविणीषु सत्सङ्गइव प्रकाशमुपगच्छति भास्वति सत्सङ्गादज्ञानइव भगवतो गभस्तिमालिनः प्रकाशान्निःशेषं प्रणष्टे तिमिरनिकरे परिसमाप्य संध्याशिवपूजनादीनि नित्यकृत्यानि सहप्रधानाभ्यां सभामण्डपमलङ्कृतवति महाराजे शिवप्रसादे महाराजेन परमप्रेम्णा प्रबद्धस्य राजधर्मप्रबन्धस्य व्याख्यासुधां महाराजमुखकमलान्निष्पतन्तीं श्रवणपुटाभ्यां निपीय निपीयामन्दमानन्दमनुभवति च तस्मिन्नतिवृद्धे प्रधानद्वये मुकुलितकरकमला प्रणामप्रणम्रमस्तकाचागत्य प्रतीहारी देव ! प्रथमस्तपस्विनामपश्चिमस्तेजस्विनामद्वितीयो जितेन्द्रियाणां द्वितीय इव भगवान् विवस्वान् कोऽपि महामुनिः पावयति पादपद्मरजसास्मद्राजभवनाङ्गणभूमिकाम् । वाञ्छति च दर्शनदानानुग्रहेण महाराजं

कृतार्थं कर्तुमतःपरं देवः प्रमाणमिति व्यजिज्ञपत् । नरपतिस्तु श्रुत्वैतद्वचन-महो महत्तास्मद्भाग्यानामहो धन्यतास्य वासरस्याहो रम्यता चास्या वेलाया य-द्द्य महामुनिदर्शनलाभं लप्स्यामहे इत्युक्त्वा आर्य शंभुदत्त ! प्रतीहार्या सहा-नया गत्वा समानीयतामत्र स महाभाग इत्याज्ञापयत् । शंभुदत्तस्तु तदाज्ञो-त्तरक्षणएव त्वरितं गत्वा सह महामुनिना सभामण्डपद्वारमलञ्चकार । दूरादेवा-गच्छन्तं मुनिवरमवलोक्य परित्यक्तसिंहासनो नरेश्वरः कतिपयानि पदान्यभि-मुखं गत्वा साष्टाङ्गपातं प्रणम्य विधिवदभ्यर्च्य परमाग्रहेण च समर्प्य तस्मै स्वं सिंहासनं मुनिमहेन्द्राय तेनार्पितां शुभाशीःपरंपरां शिरसाभिवन्द्य च भक्ति-भरनम्रे भूयोभूयः प्रणम्य मुनिवरचरणौ यथास्थानमुपविष्टे प्रधानद्वये प्रणा-मप्रवद्धाञ्जलिर्भूत्वा मुनिराज ! अकस्मादुपलब्धेनामुना युष्मद्दर्शनेनास्माकं स-फलं जन्म जीवितं च तथापि केन प्रयोजनेनात्रभवद्भिर्भवद्भिरागत्यात्र कृताः कृतार्था वयमिति ज्ञातुमातुरतराणि नश्चेतांसि । किंचेदं राज्यमिमौ प्रधाना-वमी कोशा इमानि बलानि सकलोप्ययं मे परिवारोहमपि च युष्मदायत्त ए-वास्मि तन्निःशङ्कमभिधीयतां नन्दनचन्दनपल्लवमालामिव युष्मदाज्ञां शिरसा वोढुमहमस्मि सोत्साह इत्यप्रार्थयत् । नरपतिविनयवचनामृतानि निपीय प्रस-न्नस्वान्तो मुनिराजो राजन् ! विस्तीर्णविस्तीर्णेस्मिन्नर्णवाम्बरावलये सन्ति बहवो राजानः सन्ति बहवो मन्त्रिणः सन्ति बहवः प्रजाश्च परं राजसु त्वमिव त्वमेव प्रधानेषु तव प्रधानाइव तव प्राधानाएव प्रजासु तव प्रजा इव तव प्रजा एव विलसन्ति । दृष्टा मया पूर्वपश्चिमदक्षिणोत्तरदिक्ष्वनेके राजानोनेके मन्त्रि-णोनेकाः प्रजाश्च परं क्वचित्प्रभवोऽमात्येष्वौदास्यवन्तो वर्तन्ते क्वचिदमात्याः प्र-भुप्रतिकूलशीला लक्ष्यन्ते क्वचित्प्रभुप्रधानयोरानुकूल्ये प्रजा तयोर्विषय औदा-स्यदास्यमनुभवन्ती दृश्यते क्वचिद्राज्यभक्तिभरनम्रायामपि प्रजायां प्रधानप्रजे-श्वरौ प्रजाप्रातिकूल्यावलम्बिनौ विलोक्येते क्वचिन्नामात्या हिताहितसत्यासत्य-

कृत्याकृत्यान्युपदिशन्ति राजभ्यः क्वचिच्च हितोपदेशपराणामपि मन्त्रिणां न पवित्राणि सदुपदेशवचनानि कर्णेषु कुर्वन्ति राजानस्ततो न राजाभ्युदयो भवति न राज्याभिवृद्धिर्भवति न प्रजाः सुखान्यनुभवन्ति न च प्रधानाः प्रतिष्ठामधिगच्छन्ति । सर्वप्रकारानुकूलता तु परमशिवप्रसादप्रभावेण शिवप्रसादराज्य एव समुल्लसतीति बहुलोकमुखेभ्यो निशम्य तद्विलोकयितुमेवात्रागतोस्मि । विलोक्य च यथाश्रुतं तथा सर्वमनवद्यं परमं परितोषमाप्तं मनो मे प्रार्थयति प्रणतप्रियंकरं शंकरं सर्वदा भवतु भवद्राज्ये प्रभुप्रधानप्रजानामैकमत्यं परस्परानुकूल्यं परस्परहितैषित्वं च । इत्युक्त्वा विरते मुनिराजे भगवन् ! सर्वमेतद्भवादृशमहानुभावकृपावलोकलवप्रभावफलमेवेति मन्येहम् । विना परमेश्वरप्रसादं विना महात्मनामनुकम्पया विनाचागण्यैः पुण्यैरतिदुर्लभा खलु सर्वप्रकारानुकूलता । परमशिवलोकमुपगतेषु मे तातपादेषु यदारभ्यारूढोहमेतद्राज्यसिंहासनं तत आरभ्याद्यावधि निखिलमपीदमनुकूलं मे । किमहमनयोरमात्ययोरानुकूल्यं वर्णये किमहमस्याः प्राणप्रियाया मन्मनोनुकूलतां वर्णये किमहमेतेषां मे तनयानां मन्मताप्रतिकूलतां वर्णये किंवाहमेतस्या मे प्रजाया निःसीमानुपमं च मन्निबद्धमनुरागं वर्णये । सर्वेप्येते मत्प्रियहितार्थमात्मप्राणानपि तृणनिर्विशेषं परित्यक्तुं न विलम्बमवलम्बन्ते । तत्राप्येतयोः पवित्रचरित्रयोर्मित्रयोर्मद्विषये काप्यद्भुतैव भक्तिर्जागर्ति । ममापि तद्गतं प्रेम किमप्यन्यदेवानुदिनमेधते । तत्कैः कीदृशैः कस्मिन् भवे विनिर्मितैर्जपतपःस्वाध्यायेश्वरसमर्चनदानदयाद्यैर्मदीयतातपादानां वाऽगण्यैः पुण्यैरुपलब्धमेतन्मित्ररत्नद्वयं सर्वप्रकारानुकूलता च कलत्रमित्रपुत्रप्रजानां मयि जागर्तीति ज्ञातुमीहे भूतभविष्यवर्तमानविदां वरिष्ठस्य भगवतो मुखात् । ज्ञात्वा च भूयोपि भूरीणि तादृश्येव पुण्यानि निर्माय निर्माय पुनर्भविष्यति भवे भविष्यति जनोयमेतादृशमित्रकलत्रपुत्रप्रजालाभवान् भवत्प्रसादात् । इतिमेदिनीन्दोर्वाचमाचम्य किं-

चिद्विहस्य च मुनिराजेन राजन्! यदि वरीवर्ति ते निजपूर्वजन्मवृत्तान्तं प्रधानयोरनयोः पूर्ववृत्तान्तं कैः कैः कीदृशैश्च पुण्यैरुपलब्धैषा सुरासुराणामपि स्पृहणीया सुखपरम्परेति च श्रोतुं वाञ्छा तर्हि अतिविस्तीर्णं हि तद्वृत्त ततो यावद्वृत्तान्तश्रवणसमाप्ति न कोप्यन्यः सभामण्डपमेनं प्रविशेदित्याज्ञाप्यतां प्रतीहारी । इत्युक्ते तत्क्षण एव प्रतीहारि! स्वाधिकारमशून्यं कुरु । न मदीयाज्ञामन्तरा कोपि सभामेनां प्रवेशयितव्य इति राज्ञ आज्ञां शिरस्याधाय गतायां तस्यां कृपापारपारावार मुनिराज! निःशङ्कमिदानीमभिधीयतामिति सप्रणयं प्रणम्य प्रार्थितः पृथ्वीप्राणेश्वरेण स तपस्वी प्रीतिपीयूषपूर्णया दृशा सर्वान् क्षणं विलोक्य महाराज शिवप्रसाद! प्रधानौ शिवदत्तशंभुदत्तौ! यदि युष्माकं स्वस्वपूर्वभवेतिवृत्तश्रवणेतिमहत्कौतुकं तर्हि सानन्दं सावधानतया श्रूयतामित्युक्त्वा वक्तुमारभत ।

अभूदभूतपूर्वप्रज्ञाप्राबल्यपरितर्जितगीर्वाणगुरुप्रज्ञाप्रतापः प्रतापतपनोदयसमुन्मूलितप्रत्यर्थिपार्थिवतमस्तोमः सोम इव मृदुलमञ्जुलकरनिकरानुरञ्जितनिखिललोकः कोकइव मित्रमण्डलोदयैकबद्धहृदयः सदयतासमुपार्जितशिबिप्रभृतिभूपालप्रतिमो निष्प्रतिमशौर्यसमुत्सारितनिखिललोकभयो नयोपार्जितशत्रमित्रसमतासत्कीर्तिः सत्कीर्तिसुधासिंधुपूरसमाह्लादितनिखिलभुवनो भुवनोद्वेगकरवैरिनिकरनिकन्दनकालः कीर्तिपालो नाम भूपालः । तस्य चासीदशेषसतीजनशिरोरत्नं सुकन्या नाम कलत्रं मित्रं च मनोवाक्कर्मभिरभिन्नं विद्वज्जनमनोमयूरविश्रामारामः करुणामृतपूरपूर्णान्तःकरणः शरणागतवत्सलः शिवशर्मानाम । तस्याप्यलमलञ्चकार निलयमचलामलसौशील्यसारल्यशाला सुबाला नाम धर्मपत्नी । व्यतीतेप्यर्द्धवयसि दैवादप्राप्तापत्यमुखदर्शनसुखौ कीर्तिपालशिवशर्माणौ न महात्मजनमहानुग्रहमन्तरा प्रयान्ति पुरुषाः पुरुषार्थचतुष्टयपात्रतामिति निश्चित्य परेश्वरप्रसादमप्राप्य न पुनः पत्तनंप्रति निवर्तनीयमिति

प्रतिज्ञाय केनाप्यलक्षितगती नगराद्बहिर्निर्जग्मतुः । ततश्च पञ्चामेव योजनद्वयमात्रमध्वानमुल्लङ्घ्य कमपि महर्षेराश्रमं ददृशतुः । कलिकालप्रबलपराभवभीतकृतयुगाभयस्थान इव अहिंसासाम्राज्य इव अस्तेयताकुलमन्दिर इव सत्योत्पत्तिक्षेत्र इव ब्रह्मचर्यभद्रासन इव अप्रतिग्रहविहारवेश्मनीव च तस्मिन्नाश्रमे इतस्ततश्चलन्तौ नम्रनम्रतरशाखाग्रावलग्नवल्कलैणाजिनकमण्डलून् तापसकुमारानिव तरुवरान् पश्यन्तौ बहुकालसहवासपरिचयान्निगमागमप्रवीणेभ्यः शुकसारिकाकुलेभ्यः शङ्कमानैर्मुनिकुमारैर्गीयमानानि सामानि यजूंषि च शृण्वन्तौ प्रियसखे शिवशर्मन् ! पश्य अत्रायं कीरो महाभारतं वक्ति इतोयं कीरो रमणीयं रामायणं गायति परतोयं कीरः शिवपुराणं पठति अन्ये चामी पक्षिणो मुनय इव धृतमौना निभृतनिश्चलाः शृण्वन्ति । सत्यं देव ! दीयतामितोपि दृष्टिपातः इत एषा सारिका सतीधर्मान् परत एषा सारिका सतीचरितानि अपरत एषा सारिका कुलाङ्गनाकृत्यानि गायति अन्याश्चातिनिश्चला मुनिपत्न्य इव शृण्वन्ति । इति प्रतिपथं मनोहरान् वनोद्देशान् मिथो दर्शयन्तावहो प्रभावो महर्षिमण्डलसंगस्येति मुहुर्मनसि विचारयन्तावेकस्य वटविटपिनस्तले स्थितं मूर्तमिव तपोराशिं नवावतारमिव धर्मं शुकीसङ्गमाभिलाषसंलग्नमहाकल्मषक्षालनायाङ्गीकृततपसमिवाग्निदेवं शिवभक्तमौलिमालिसुमालिविद्वेषमहापातकध्वंसाय धृततपस्विवेषमिव दिनेशं करालकलिकालकल्मषपराभवभिया परमशिवमभयार्थमागतं धृतमुनिवपुषमिव वेदं आजन्मसमाश्रितस्मरहरचरणसमर्चनजन्यं पुण्यपुञ्जमिव मूर्तं जटाभारमुद्वहन्तं रुद्राक्षकङ्कणं रुद्राक्षकेयूरं रुद्राक्षकुण्डलं रुद्राक्षकण्ठाभरणं रुद्राक्षहारं पिशङ्गजटाजूटप्रबद्धरुद्राक्षमालया कपर्दप्रबद्धपृदाकुप्रभोर्भगवतः प्रमथप्रभोः शोभामनुकुर्वन्तं सितभस्मोद्धूलितापादमस्तकं दक्षशापसंजातयक्ष्मणः शशलक्ष्मणः श्रेयःकरणाय शरणागतया नक्षत्रमालयेव स्फटिकमणिमालयालङ्कृतदक्षिणकरं इतरेण च करेण गुरुदाराभिमर्षणश्रवण-

प्रकुपितकात्यायनीकान्तकोपानलभीतं तद्भक्त एव तस्माद्रक्षितुं शक्त इति विचार्य शरणागतं चन्द्रमिव स्फटिकमणिमयं कमण्डलुमुद्वहन्तं शतरुद्रियमन्त्रैः पुरस्थितं चिन्तामणिमयं शिवलिङ्गमर्चयन्तं समूलमुन्मूलितमन्युमुपमन्युनामानं मुनिशिरोमणिं निरीक्ष्याहो महद्भाग्यमिति मत्वा च नयनयुगलस्रवन्मुदश्रुसलिलौ मुकुलितकरकमलौ साष्टाङ्गपातं तच्चरणयोः परमेण प्रेम्णा मुहुश्चक्रतुरनेकान् प्रणामान् । अथ समाप्तशिवार्चनेन मुनिना कौ युवां कुत आगतौ किं कारणं चात्रागमनस्येति सस्नेहादरं परिपृष्टौ निजागमननिदानमखिलं तदग्रे निवेदयामासतुः । मुनिस्तु निशम्यैतत् क्षणं निमील्य नेत्रे किमपि ध्यात्वा च समन्दस्मितं सप्रेमावलोकं च तौ प्राह । वत्सौ ! न धीधनेन धीरेण कदापि कस्मिंश्चिदपि कर्मणि निराशता स्वीकार्या किंतु यावद्बुद्धिबलोदयं स्वोररीकृतसिद्धये सोत्साहं सधैर्यं प्रयत्नपरंपरा एव विधेया इत्यागमसिद्धं तद्भवन्तावपि स्वमनोभिवाञ्छितपूर्तये कुरुतमेकादशातिरुद्रान् ततः प्रसन्न आशुतोषः शंकरः श्रेय एव युवयोर्विधास्यतीति । मुनिवरवचनविरामे च तमेव मुनिवर्यं प्रणामसहस्रैः प्रार्थनासहस्रैश्च तत्कर्मणि मुख्यं विधायैकादशातिरुद्रयागारम्भं कारयामासतुः । स्वयं च गृहीतदीक्षौ भस्मभूषितदेहौ धृतरुद्राक्षमालावहर्निशं शिवार्चनमेव चक्रतुः । एवं तादृशमहायज्ञसमाप्तिदिवसे किञ्चित्समुदयवति भगवति भास्वति समाप्तशिवपूजन उपमन्युरहो कीदृशीयं प्रणतवत्सलस्य भगवतो भवानीवल्लभस्य भक्तवत्सलतेत्युक्त्वा जहास । तच्च श्रुत्वा कीर्तिपालशिवशर्माणौ भगवन् ! कथमकस्मादिदं सानन्दं भगवतो हास्यमिति ज्ञातुमीहावहे तन्नचेद्यदि रहस्यं तर्हि कथनानुग्रहं करिष्यथेत्यूचतुः। भगवानुपमन्युरपि तयोर्वचनविरामोत्तरक्षण एव वत्सौ ! न रहस्यं श्रूयतां यदि कौतुकम् ।

आसीदशेषभुवनभूषणायमानः प्रबलप्रतापतपनतापितारातिस्त्रिभुवनविख्या-

तत्ख्यातिरग्रेसरः शूराणां पुरःसरः प्राज्ञानां सीमा सौजन्यस्य अवधिर्दयौदार्यदाक्षिण्यानां निधिः सद्गुणरत्नानां लीलानिलयो विनयार्जवविवेकानां शौर्यशक्तिसमुत्सारिताखिलाचलावलयशल्यः शत्रुशल्यो नाम भूपालकुमारः । सचैकदा स्वकीयहृदयनिर्विशेषे प्रणयवति विनयवति सत्यशीलनाम्नि प्रधाने समारोप्य सकलमुर्वरावलयभारं कौतुकालोकनलुब्धतया नगराद्बहिर्निरगच्छत् । कतिपयपदातिपरिवृतः श्वेताश्वसंरूढो धृतवीरोचितविविधायुधनिवहश्चचारच पुण्यास्वरण्यानीषु । संचरंश्च तत्रापश्यदेकमनेकानोकहसहस्रसङ्गसंछादितशिखरसहस्रं परितः प्रस्रवत्स्रोतःसहस्रमज्जदुन्मज्जदनेकविचित्रपतत्रिकुलकमनीयं निर्मनुजं कमप्यवर्णनीयविविधहृदयनयनानन्दप्रदप्रदेशमतिमहान्तं महीधरं । दृष्ट्वा च संजातविशेषकौतुकदर्शनाकाङ्क्षोः हर्षुलतातरलवृत्तिः प्राह समीपे समाहूय स्वकीयान् प्रणयिनः किंकरान् । वत्सा ! यूयमुपविशतात्रैव क्षणमेनमश्वमवलम्ब्य तावद्यावदहन्तु शिखरिणोस्य सज्जनमनोवृत्तिमिवातिगम्भीरां गुहां प्रविश्य तत्र कश्चित्तपस्वीजनश्चेत्तं प्रणम्य त्वरितमेवोपयास्यामीति । अथ यथाज्ञा देवस्येत्युदीर्य गुहामुखसमीपवेदिकावस्थितेषु तेषु स्वयमेकएवातिगहनं गुहातमः प्रविवेश । संचलंश्च तत्रातिगाधे तमसि न किमपि पश्यन् न किमपि शृण्वन् न बहिर्गमनमार्गमपि जानन् प्रसारितप्रलंबबाहुदण्डावलम्बितोभयपार्श्वभित्तिर्योजनचतुष्टयमिवाध्वानमतिक्रम्य पुनः सूर्योदयावसरे प्रदर्शितप्रकाशं गुहामुखं ददर्श।अथातिहर्षभरभरितान्तःकरणस्त्वरितं गुहामुखाद्बहिर्निष्क्रम्य परितः पद्मरागमणिमयसोपानपरंपरं विकचपद्मरागमणिगणगर्वसर्वंकषपद्मखंडं पद्मरागमणिमयहंसकारण्डवचक्रवाकजलकुक्कुटचक्रवालालंकृतं निश्चलामलपद्मरागमणिमयमत्स्यकच्छपमकरनिकरं निर्मनुजं निर्मृगं निर्विहङ्गं मनोनयनाह्लादकरं चातिसरसं सरः संददर्श । तद्दर्शनादेव गतश्रमस्तदीयसलिलपानाच्चापगतक्षुत्तृट्परिभवस्तदीयपश्चिमतीरे क्षणं विश्रम्येतस्ततो दत्तदृष्टिर्दृष्टवान्नातिदूरे पद्मरागमणिमयं

दाक्षायणीप्रणयिनो भगवतो मनोहरं मन्दिरम् । अनन्तरं च सत्वरं तत्र गत्वा पद्मरागमणिमय्या रचिताञ्जलिपुटया नातिदूरे बहिःस्थितया शालभञ्जिकया संप्रार्थ्यमानमिव पद्मरागमणिमयं शिवलिङ्गं परमेण प्रेम्णा प्रणम्य प्रतिनिवृत्तो मणिमयशालभञ्जिकावलम्बितस्तंभलग्नायां शिलायां—

नात्र स्थेयं मानवेन देवेन दानवेन वा ।
यदि स्थास्यत्यहोरात्रं पद्मरागो भविष्यति ॥
दैवादेवागतेनात्र पूर्वस्य पश्चिमस्य वा ।
गिरेरेव गुहा सेव्या स्वकीयं श्रेय इच्छता ॥

इति लेखमपश्यत् । अवगतलेखार्थश्चाहो अतिरमणीयमप्येतत्स्थलं न चिरस्थानार्हं । भवतु पूर्वस्य पश्चिमस्य वा गिरेर्गुहैव सेव्येति लेखकर्तुराशयस्तदहं पूर्वगिरेर्गुहातस्तु समागतो न परं तत्र कोऽपि मुनिर्मनुजो वा मिलितस्तदधुना पश्चिमगिरिगुहामेव प्रविश्य पश्यानि । भविष्यति तत्र यदि कश्चिन्मुनिर्मानवो वा देवो दानवो वा यक्षो रक्षो वा सिद्धो गन्धर्वो वा तर्हि तं प्रणम्य ततः सर्वमेतत्स्थलवृत्तान्तमतिविस्मयकरमवगमिष्यामीति विचार्य पश्चिमपर्वतगुहामेवाविवेश । तस्यां च पूर्ववदेव संचलन् योजनचतुष्टयमात्रमध्वानमुल्लङ्घयान्येद्युर्मध्याह्नवेलायां कथंकथमपि महता प्रयासेनातिश्रान्तस्तृषितो गिरिवरदरीद्वाराद्बहिर्निस्सरन् ददर्श पूर्ववत् स्फटिकमणिशिलानिबद्धसोपानपङ्क्तिमण्डितं स्फटिकमणिमयसर्वजलचरस्थलचरनिकरं कासारं । तत्रापि तदीयसलिलपानविस्मृतश्रम इतस्ततो दत्तदृष्टिर्दृष्टिगोचरं चकार नातिदूरे भगवतो भवानीवल्लभस्य स्फटिकमणिमयं भवनं । गत्वा च तत्र नत्वा च स्फटिकमणिमयं शिवलिङ्गं तत्पुरःस्थितायाः शालभञ्जिकायाः पृष्ठे स्तंभलग्नायां स्फटिकमणिशिलायां स्फटिकोऽत्र भविष्यतीत्येतावन्मात्रभेदं पूर्वदृष्टलेखाशयं लेखं लोचनगोचरं चकार । अनन्तरं च लेखाशयमाश्रयन् पुनः पश्चिमगिरिगह्वरविवरमेव

प्रवेष्टुं सोत्साहं मनश्चक्रेऽवनिचक्रेश्वरसूनुः । प्रायो निराकारमपि मनः सति सत्यसति वा यत्र यत्र वस्तुनि प्रविशति ततस्तु न विपत्सहस्रमप्यनुभवन्न-दुष्कीर्तिमप्यधिगच्छन्नहानिशतान्यप्युपगच्छत् प्रतिनिवर्तते । उपहसिताशेषहठस्य वशीकृतानिःशेषशठस्य मनोहठस्याग्रे त्वकिंचित्कराः खलु गुरूपदेशा निरर्थानि शास्त्रश्रवणानि निष्फला च सज्जनानामतिपवित्रापि मैत्री । स्वयं नानुभूय प्राणान्तामापदं नानुभूयातिमहान्तमनुतापं नानुभूय च दुरपास्यतामौदास्यदास्यदाननिदानतां नाभीष्टवस्तुतः कदाचिदपि शैथिल्य-मवलम्बते । एवं राजकुमारस्य मनोप्यशिथिलकौतुकालोकोत्कण्ठमासीत्ततो न ततः प्रतिनिवर्तनमङ्गीकृत्य पश्चिमाद्रिदरीमुखमेव प्रविवेश । तत्रापि निबिडतमतमस्तोमपिहितावलोकनशक्तिर्योजनचतुष्टयमात्रमध्वानमुल्लंघ्यान्येद्युः प्रहरार्द्धमात्रशेषे वासरे गिरिदरीद्वारनिःसृतः स कुमार इन्द्रनीलमणिशिलानि बद्धसोपानशालि सरोवरमिन्द्रनीलमणिमयमेव सर्वं प्रदेशमिन्द्रनीलमणिमयान् मृगान् खगान् यादोगणांश्च निश्चलान्विलोकयामास । विलोक्यचाहो कस्यायं प्रभावो येन देवक्रीडार्हाण्यपि निर्देवानि निर्दानवानि निर्मुनीनि निर्मानवानि चैतानि स्थलानि नैतावदेव किंतु पशवः पक्षिणो जलचराश्च निष्प्राणा मणिमया एव विलोक्यन्ते । भविष्यति कस्यचित्तापसप्रवरस्य शापप्रभाव एषः । कथमन्यथाऽतिरमणीयान्यपि स्थानानि प्राणिशून्यानि भवेयुः । भवतु किं तया चिन्तया मे सांप्रतमतिश्रान्तोऽस्मि विशीर्णं मे चरणतलयुगलं तदमुष्येन्द्रनीलमणिमयस्य श्रीचन्द्रचूडामणेरिन्द्रनीलमणिमये मण्डपे क्षणं विश्रम्य पुनः प्रयाणमङ्गीकरिष्यामीति विचार्य बहुप्रवासपरिश्रम-व्रणितकोमलचरणयुगलः शनैःशनैस्तत्र गत्वा नत्वा च भगवन्तं चन्द्रचूडामणिं यावद्विश्रमितुमारेभे तावत्पूर्ववत्तस्य दृष्टिपथमवाप आसायं समयं तिष्ठन्निद्र-नीलो भविष्यति इत्येतावन्मात्रभेदः पूर्वदृष्टलेखाशय इन्द्रनीलमणिमयशालभ-

ञ्जिकावलम्बितमणिमयस्तम्भलग्नः शिलालेखः । लेखावलोकनोत्तरक्षण एव पूर्वं सरससरःसलिलपानविस्मृतश्रमोपि पुनः कौतुकालोकनाग्रहवत्या सह मत्या श्रान्ततरो गलितधैर्यबलः किंकर्तव्यतामूढ आसन्नसायंसमयत्वादात्मनो भाविनमिन्द्रनीलमणिभावमाशङ्कमानो लेखाभिमुखएव कीलित इव तिष्ठन् व्याजहार । हा तात चन्द्रकीर्ते हा मातः सुशीले वञ्चितौ युवाममुनाल्पबुद्धिना पुत्रेण । हा प्रिये चन्द्रप्रभेन लब्धो मन्दभाग्येनामुना जनेन कन्याशालासमागतायास्तव शास्त्रविनोदः । हा प्रियसखे सकलविद्वज्जनस्पृहणीयशील सत्यशील नामुना दुर्भाग्येन भवदुपदिष्टेषु विश्वहितेषु कार्येषु काप्युपयोगिता स्वीकृता । हा अमोघमन्त्रा आर्यमन्त्रिणः किं कुर्वन्तु शौर्यधैर्यस्वतन्त्रा अपि युष्मन्मन्त्रा मन्मौर्ख्यलब्धेऽस्मिन् विषमे । हा निःसीमस्नेहवत्यः प्रजाः पापस्य मे प्रवृत्तिमपि नोपलभ्य तपोवनभूमिमाश्रितेषु तातपादेषु को युष्माकं लालनपालनपोषणानि करिष्यति । हा दैव कौतुकालोकनाग्रहग्रहग्रस्तेन मौर्ख्यान्मया किमिदमाचरितं । किं तातपादानामाज्ञा परिपालिता किं मातृचरणानां मनोवृत्तिः संरक्षिता किं प्राणप्रियाया मे प्रियमाचरितं किं सत्यशीलस्य स्नेहोनुरुद्धः किं राज्यस्याभ्युदयः कृतः किं वा प्रजायाः प्रियमाचरितं । न किंचित् । कीदृशीयं मूर्खता कीदृशीयमविमृष्यकारिता कीदृशी चेयं बालबुद्धिता मे । हन्तेदानीं कीदृशी मे मातृणां दशा कीदृशी मे पितृचरणानां दशा कीदृशी मे मित्रस्य दशा कीदृशी मे प्राणप्रियाया दशा कीदृशी मे प्रधानानां दशा कीदृशी मे किंकराणां दशा कीदृशी मे प्रजायाश्च दशा भविष्यति अथवा सर्वेषां सुदशैव भविष्यति यदि जीविष्यति प्राणनिर्विशेषो मे प्रियमित्रं सत्यशीलः । स खलु तातमम्बां प्रधानान् प्रजा अनुजीविनश्च विस्मृतमद्विरहदुःखान् करिष्यति नैतावदेव प्राणप्रियां मे चन्द्रप्रभामप्याजन्मपवित्रचरित्रः पुत्र इवौरसो मातृनिर्विशेषं परिचरन् चिरेण विस्मृतदुःखामुचितका-

रिणीं च करिष्यति परं स एवाजन्मतोऽपरिचितक्षणमात्रमद्विरहो मत्प्रवृत्त्यनुपलब्धिश्रवणसमय एव प्रणष्टप्राणो भविष्यति । हा हन्त त्वादृशे मित्ररत्ने मद्विरहाधिना । नष्टे प्रणष्टमखिलं सत्यशील भविष्यति ॥ इति वदन् कम्पितहृदयोमीलितनयनयुगलोऽविरलगलद्बाष्पजलो मूर्च्छापरवशः पतन्नाललम्बे नीलमणिशालभञ्जिकायाः करकमलं । मणिमयशालभञ्जिकाकरस्पर्शप्रभावादिव सद्योनीलमणिमयमूर्तिरभूद्भूपकुमारः । भूपकुमारकरस्पर्शप्रभावादिव च सद्यः संप्राप्तजीवना सा शालभञ्जिकापि काचिद्देवकन्या वभूव । यावच्च सा स्वकीयकरावलम्बिनमिलाविलासिकुमारं विलोक्य कोयं कुत आगतः कथमीदृशीं दशामकस्मात्प्राप्तः का चाहं कमेतदखिलं पृच्छामीति विविधविचारमग्नमानसा विस्मयविस्मृतनिमेषा च परितः पश्यति तावदितरोपि स्वरूपसंपदुपमर्दितकन्दर्पदर्पः प्रियजनवियोगखिन्न इतस्ततो दत्तदृष्टिः शून्यचित्त आलोच्य लोचनलोभिनीं नीलमणिमयीं राजकुमारप्रतिमां हा प्रियमित्र शत्रुशल्य! कथमेवमेकपदएवेदृशीं दशां गतोसि । समानसुखदुःखमपि मां न जानासि दृष्ट्वापि न संभाषसे किमपराद्धममुना जनेन ते । दूरेस्तु मदीयः स्नेहो भक्तिर्वा । निरुपमनिःसीमप्रेमपूर्णान्तःकरणायां चन्द्रप्रभायामपि नोदयति कच्चिद्दयाङ्कुरस्ते । दूरेस्तु सापि । निर्निमित्तनैसर्गिकानुपमवात्सल्यविवशयोर्मातापित्रोरप्युपरि नोद्भवति ते भक्तिः । हा हन्त क्व निर्गता निष्प्रतिमा ते पितृभक्तिः क्व विलीना ते निरुपमा मातृवत्सलता क्व प्रस्थिता ते सन्मित्रसर्वस्वता क्व प्रोषिता ते स्वदारानुकूलता । हन्त हन्त कथं किमपि न प्रतिवदसि! ( चिरं निर्वर्ण्य ) किंप्रोषितप्राणोसि किंवा केनापि मन्मनःसमाश्वासनाय मन्मित्रप्रतिमेयं स्थापितास्ति । यद्येवं तर्हि हन्त कान्तार्हितं भूमिवलयभूषणं मे मित्ररत्नमिति वदन् मूर्च्छामीलितलोचनोवन्यां न्यपतत् । ततो निजाङ्कलीनां नीलमणिमयीमचलपालकुमारमूर्तिं शनैः शनैरधो निधाय देवकन्यया स्वकीयचैलाञ्चलैर्वी-

जिताङ्गो मुहूर्तात्प्राप्तसंज्ञः समुत्थाय अयि प्रियमित्र ! तावकीनताताचरणानां राजधानीमपि न स्मरसि । त्वदीयप्रयाणदिवसादेवारभ्य दुर्दशैव संपन्ना नः सर्वेषां । हन्त यद्यस्मन्मन्दभाग्यवशात्प्रणष्टप्राणोसि तर्हि हता सज्जनता मृता विवेकिता वञ्चिता शास्त्रज्ञता प्रणष्टा प्राज्ञता निराश्रया चैकपत्नीव्रतवत्तेति विलपन् पुनर्मुमूर्च्छ । पुनरपि सरःसलिलसेकसंजातसंज्ञमकरोत्तं देवकन्या । अथ पुनरुत्थाय यावत्तस्यामेव राजकुमारमूर्तौ दृष्टिं युयोज तावन्मुकुटित-करकमला सा तिरस्करिणीव मध्ये स्थित्वा प्रावोचत् । महाभाग ! स्वागतं ते । कुत आगतोसि कोऽसि कस्य पुत्रोऽसि किं निदानमत्रागमनस्य कोऽयं ते कश्च भवान् तस्य य एवं तदर्थं मरणादप्यधिकं दुःखं सहसे । एतत्सर्वं न यावत्प्रियजनदुर्दशावलोकनसुलभा मूर्च्छा त्वां परवशं कुर्यात्तावदेव निवेदयिष्यसीति भवन्मुखमुद्रादर्शनविश्वस्तहृदयाया अस्ति मे प्रत्याशेति । एवमुक्तश्च तया दीर्घमुष्णं च निःश्वस्य देवि ! किं मे मन्दभाग्यस्य जन्मवृत्तान्तश्रवणेन तथापि श्रूयतां यदि कौतुकम् ।

अस्ति किल विविधविभवनिर्जितसुरासुरनगरकीर्तिर्दिव्यकौशाम्बी नाम नगरी । तस्यां प्रतिवसतिस्म प्रचण्डदोर्दण्डखण्डिताखण्डवैरिमण्डलो वसुंधराखण्डलस्त्रिभुवनपरितापोपशमनक्षमनिष्कलङ्ककीर्तिचन्द्रश्चन्द्रकीर्तिर्नाम । तस्य चास्ति पातिव्रत्यपवित्रचरित्रा पवित्राशया सौशील्यलीलाभवनं सुशीला नाम धर्मपत्नी । मित्रं चाभिन्नमनोवाक्कायकर्मापरमिव हृदयं द्वितीय इवात्मा सुव्रतो नाम विप्रः । तस्यापि सुशीलानामग्रेसरा सरससरलवचोविलासकुशला नयमयनयना सुनयना नाम धर्मपत्नी । तौ च नृपतिसचिवौ धर्मशास्त्रानुसारेण स्वकीयौरसपुत्रनिर्विशेषमशेषाः प्रजाः परिपालयांचक्रतुः । एवं निजाः प्रजाः परमेण प्रेम्णा पालयतोर्लालयतोः पोषयतोर्व्यतीतार्धवयसोश्च तयोरभवन्मनस्येकदानपत्यताजन्मा विषविषमो विषादः तदपनयनाय सत्पुत्रप्राप्तये च

पुरेषु ग्रामेषु पत्तनेषु व्रजेष्वाकरेषु च स्थापयामासतुर्विशाला विद्याशालाः । प्रतिदिवसोदयं च सपत्नीकौ तत्र गत्वा सर्वेभ्यो विद्यार्थिभ्यो बालेभ्यश्च हृद्य-गद्यपद्यानि चम्पूनाटककोषकाव्यकथाकथानकेतिहासपुराणपुस्तकानि विचित्राणि क्रीडनकानि मनोहराणि वासांसि निरुपमस्वादानि खाद्यभोज्यलेह्यचोष्यपेयानि चार्पयामासतुः। अभिलाषाष्टकपाठसहस्राणि शिवलिङ्गानामुपरि शतरुद्रियाभिषेकलक्षाणि चिन्तामणिलिङ्गकोटीश्च शान्तदान्तविवेकवद्ब्राह्मणद्वारा कारयामासतुः । स्वयं च चक्रतुः । न किल क्वापि विफला भवति चन्द्रचूडपरिचर्येति दृढनिश्चययोस्तयोः समकाल एव धर्मपत्न्यावन्तर्वत्न्यौ बभूवतुः । तयोः सुषुवे प्रथमं सुशीला सुशीलानां प्रथमं मे प्रियमित्रममुं । द्वितीयेऽह्नि समभूदस्य मन्दभाग्यस्य जनस्य सन्मित्रविरहदुःखसहनायैव केवलं जन्म । व्यतीतेषु द्वादशसु वासरेषु नामकरणावसरे राजकुमारस्य शत्रुशल्य इति मम च सत्यशील इति नाम चकार परमेण प्रेम्णा पृथ्वीपालः । व्यतीतैकवर्षस्यैव तस्य राजकुमारस्य मम च सहानेकै राजकुमारैः सामन्तकुमारैरमात्यपुत्रैश्च बालाध्ययनशालायामासीन्निवासः । यत्र नाषोडशवर्षावधि गीर्वाणवाणीमन्तराऽन्यभाषाज्ञानमासीन्नौ न च गीर्वाणवाणीप्रबद्धेषु प्रबन्धेष्वणुमात्रमप्यज्ञातमासीत् । सप्तदशवर्षत आरभ्याविंशतिवर्षसमाप्ति सर्वासु भाषासु सर्वासु कलासु सर्वेषु कृत्येषु च प्राप्तप्रावीण्यानकुर्वन्नः परमदयालवः सद्गुरवः । किंच नाविंशतिवर्षमविद्मो मातरं पितरं सुहृदं वा स्वकीयं दयालुदैशिकेभ्यो भिन्नं । किंतु तेष्वेव गुरुवरेषु मातृबुद्धयः पितृबुद्धयः सुहृद्बुद्धयः संबन्धिबुद्धयः किंबहुना परमेश्वरबुद्धयश्च सर्वे सवयसो वयमभवाम । परमकृपापारावारा गुरवोऽपि चास्मासु स्वौरसपुत्रेभ्यो विचित्रमित्रेभ्योऽतिपवित्रकलत्रेभ्योऽपि कोटिगुणाधिकप्रेमप्रसादवात्सल्यवर्षिणः संबभूवुः । यद्यपि तत्र ये ये वयं सहावसाम ते ते परस्परं सोदरनिर्विशेषस्नेहसान्द्राशया एवास्म तथापि ममास्मिन् राजकुमारे

राजकुमारस्य च निर्गुणेऽपि मयि किमप्यन्यदेव पूर्वजन्मसंबंधप्रबद्धमिवाकृत्रिममप्रतिमं चासीत्पवित्रं प्रेम । येनाहं तदीयसुखदुःखसमभागभागभवं स च मदीयसुखदुःखसमभागभागभवत् । अहं तदीयप्रियहिताभिलाष्यभवं स च मदीयप्रियहिताभिलाष्यभवत् । नाहं तदीयकोपाद्भयमभजं न च सोऽपि मदीयकोपाद्भयमभजत् । किंबहुना संसारसर्वस्वं हृदयसर्वस्वं जीवितसर्वस्वं च तमहमविदं स च मां संसारसर्वस्वं हृदयसर्वस्वं जीवितसर्वस्वं चावैत् । तादृशनिःसीमप्रेमप्रसरपरतंत्रतया नाहं तेन विना क्षणार्धमपि स्थातुमशकम् । न च सोऽपि विनामया क्षणार्धमपि स्थातुमशकत् । ततश्च यदा बाल्यसुलभेषु जातेष्वपराधेष्वंतःकृपापूर्णा अपि प्रयत्नविधृतकुटिलभ्रुकुटयः क्षणिकरोषा आशुतोषा अस्मद्गुरवो ज्ञात्वावयोः क्षणार्धविरहासहिष्णु सहजं प्रेम वत्सावद्य युवाभ्यामामुहूर्तममिथोनयनसंयोगं पृथक् पृथक् स्थेयमिति दंडं कल्पयामासुस्तदातिदुःखदमिमं दंडं मन्यमानौ सोऽयमहं च स्वस्वशिक्षागृहस्थितौ सदीर्घनिःश्वासं सबाष्पपूरप्रसरं सांतस्तापं च तावन्मात्रेऽपि विरहे वर्षशतवियुक्ताविव मूकाविव बधिराविव भूताविष्टाविव मत्ताविवोन्मत्ताविव जडाविव केवलं हा दैव कस्येदं कर्मणः फलं न पुनस्तादृशं कर्म कदाचिदपि करिष्यावः । क्षमध्वं क्षमाक्षमायमानमानसा आर्या गुरव एकमिममपराधं बालयोर्वः । आर्याः कृपारसप्रपा गुरुपत्न्यः ! प्रसाद्यास्मद्गुरुवर्यानस्मादतिदुःसहान्मोचयध्वं प्रचंडाद्दंडाद्युष्माकमिमौ दीनौ पुत्रौ इत्यादि जल्पंतौ नाध्ययने न ध्याने नासनेषु न व्यायामेषु न लेखनेषु न प्राणायामेषु नकाव्यकथाकथानकेषु न निगमेषु नागमेषु न कलासु च प्राप्तप्रबोधावभवाव । निद्रायामप्यहं स च प्रियसखे कदा नौ समागमो भविष्यति परमदयालवः श्रीगुरवो नावयोर्दयिष्यंति किं ? दयिष्यंत्येव । अथवा सकलस्वांतसाक्षी परमशिव एवास्मद्गुरुवरस्वांतालवाले दयांकुरमुत्पाद्यास्मद्वियोगदुःखमपाकरिष्यत्येव । भवतु मुहूर्तमात्रं

तु दंडसमयमतिदुःखमयममुं महता प्रयासेन कथंकथमपि क्षयं नयिष्यावः । परं यदा नासूर्योदयादासूर्यास्तं युवाभ्यां मिथो नयनसंयोगो विधेय इति दंडं कल्पयिष्यन्ति सद्गुरवस्तदानीमावयोरभाव एव भविता । हा दैव न कदाचित्तादृशो दिवसो दर्शनीयो दयया भवतेति बहुविधं प्रालपाव । श्रुत्वा चैवंविधान्नः प्रलापान् संपतदमन्दानन्दाश्रुसलिलाः परमदयालवोऽस्मद्गुरवो वत्सौ ! धन्या युवयोः पवित्रा परस्परप्रीतिरित्युक्त्वाऽसंपूर्णपूर्वाज्ञप्तदण्डसमयावपि नौ प्रेम्णा तस्माद्दण्डान्मोचयामासुः । तेषां गुरुवराणां करुणावलोकप्रभावादस्माकं सहाध्यायिनां च सर्वेषां ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदो व्याकरणादीनि च तदीयानि षडङ्गानि कण्ठस्थान्यासन् । धर्मशास्त्राण्यर्थशास्त्राणि कामशास्त्राणि मोक्षशास्त्राणि च करकलितामलकफलकल्पान्यासन् । कलाश्च सकलाः परिकलितहृदयाः समासन् । अस्मद्गुरुवर्याणां पाठनपरिपाटी काप्यन्यैवासीत् । यया स्वभावसुलभचापल्ये प्रस्फुरद्बालक्रीडावात्सल्ये बाल्येऽपि मनोरञ्जकक्रीडनवदमन्दानन्दसंदोहदोहदक्षमभून्नः पठनम् । कठिनतमे च पठनविषयेऽस्माभिः सह गद्यपद्यसूत्रवार्तिकभाष्यपङ्क्त्युद्घोषणामप्युररीचक्रुः कृपापरतन्त्रस्वान्ताः सद्गुरवो नः । स्वयं रसालंकारध्वनिसाराः सरला मृदुला मञ्जुलाश्च कविताः सद्यो निर्माय निर्माय तत्तद्विषये तादृशीः कविताः कर्तुं समशिक्षयन्नः । प्रौढवयसोऽपि च ते सवयस इवास्माभिः सहाहारविहारकाव्यशास्त्रविनोदानन्वभवन् । पठनपरिश्रमश्रान्तमानसेषु चास्मास्वस्मन्मनोविश्रामाय वात्सल्यविवशैस्तैरध्ययनशालोद्यानवृक्षाणां पालनलालनपोषणादिकार्यमप्यस्मभ्यमर्पितमासीत् । तत्रापि बालरसालस्य बकुलमञ्जर्याश्च संभावना राजकुमाराधीना बभूव बालकदम्बस्य मालत्याश्च संभावना मदधीना बभूव । इतरे च नः सहाध्यायिनो राजकुमारा इतरेषां बालतरूणां संभावनायां नियुक्ता आसन् । तथैव केकिकोकिलकोयष्टिकीरसारिकाभवनसरस्सारसारसमरालमिथुनप्रमुखानां

केलिशकुन्तानां संभावनाऽस्मभ्यमेव समर्पितासीत् । किंच सायंसमये स्वयमसीमस्नेहावेशविवशस्वान्ततया सहागत्यागत्य मनोनयनानन्दिनो नन्दननिर्विशेषान्वनप्रदेशान् शिखरिशिखरसमूहानुपहसितहीरकहारप्रकरान् समविषमशिलातलास्फालनवलात्समुच्छलतो गिरिनिर्झरशीकरनिकरांश्च परितः प्रदर्शयित्वा गीर्वाणवाणीमयानि तत्तद्विषयवर्णनानि विधातुमस्मानाज्ञापयामासुः सद्गुरवस्ते । बाल्यचापल्यवशाच्च यथाकथंचिद्यथामति विहिताश्चास्मत्कविता निर्गुणा अपि नीरसा अपि निरलंकारा अपि विलोक्य सानन्दमभिनन्दयामासुश्च । अतिदयामयाशयत्वाच्च तैर्न वयं कदाचिदुपालब्धा न कदाचित्तर्जिता न कदाचित्ताडिताश्च । अथवा दूरेऽस्तु सा वार्ताऽपि । पाठशालाप्रवेशदिवसादारभ्याविंशतिवर्षसमाप्ति नास्माभिः कदाचित्तेषां मुखकमले भ्रुकुटिकौटिल्यलोचनलौहित्यादि किमपि रोषावेशचिन्हमपि विलोकितम् । किंतु यदा कदाचिद्बाल्यान्मौर्ख्यादज्ञत्वाद्वा सति सापराधे कस्मिंश्चिदपि विद्यार्थिजने विधाय सभां समन्दस्मितं सदयावलोकं मृदुलया मधुरया च गिरा तत्तदपराधदोषदर्शकमुत्तमतमं भाषणमेव केवलं चक्रुः । यस्य श्रवणेन न कश्चित्पुनः स्वप्नेऽपि तादृशापराधपात्रतामगच्छत् । किंबहुना तेषां सद्गुरूणां गुरुपत्नीनां च कृपया यानि यानि पाठशालायामस्माभिरनुभूतानि निरतिशयानि सुखानि तानि तानि जन्मदाभ्यो जननीभ्यो जनकेभ्योप्युपलब्धुं केनचिद्विरलेन पुण्यशालिना जनेन शक्यन्ते । मन्ये मन्दभाग्यास्ते यैर्न तेषां श्रीसद्गुरूणां छात्रत्वमाश्रित्य कृपापात्रत्वमुपलब्धमिति । देवि ! किमहं तदीयां पाठनपरिपाटीं वर्णयामि किमहं तदीयां दयालुतां वर्णयामि किमहं तदीयां स्वशिष्यवत्सलतां वर्णयामि किमहं तदीयां स्वशिष्याभ्युदयाभिलाषितां वा वर्णयामि । न प्रभवति किमपि वर्णयितुं मे रसज्ञा प्रज्ञा च । केवलं अज्ञानिनोप्यगुणिनोप्यविद्वांसोऽपि वयं ज्ञानिनां गुणिनां विदुषां च गणे गणनीयतामुपनीता यदीयदयावलोकलहरीभिस्तेषां दयालुदेशिकानामत्रामुत्र

भूयाद्भूयोभूयोऽभिनवाभ्युदयनिःश्रेयससिद्धिः सर्वदेति प्रार्थये परमकृपालुं परमेश्वरम् । अन्येद्युश्च भगवतः श्रीसंज्ञाछायाहृदयदयितस्योदयतः प्रकाशमाने पूर्वदिग्विभागेऽमन्दानन्दमग्नेषु निःशेषकोकमिथुनेषु परितः प्रसृते निजनिजनिलायनिःसृतानां शकुन्तकुलानां कोलाहले श्रूयमाणेऽतिपवित्रे सद्ब्राह्मणोद्घुष्टे ब्रह्मघोषे गायकैः सानन्दं गीयमाने प्राभातिके रागे ब्राह्मे मुहूर्ते परित्यक्तनिद्राणां विरचितेश्वरस्मरणानां समानवयोभिः सह सन्मित्रैर्यथाशक्ति विहितव्यायामानां कृताभ्यङ्गानां निवर्तितोद्वर्तनानां रचितस्नानानां परिसमापितसन्ध्योपासनसावित्रीजपानां विधाय नानामणिमयशिवलिङ्गानामुपरि शतरुद्रीयाभिषेकं समर्प्य मलयजरसबिल्वदलकुसुमसमूहधूपदीपनैवेद्यानि गृहीत्वा सुरभिकुसुमसमूहमिश्राणि बिल्वदलानि तुलसीदलानि दूर्वादलानि चाञ्जलिभ्यां समन्त्रोच्चारं पुष्पाञ्जलीनर्पयत्सु विद्यार्थिनां गणेषु शनैःशनैः शान्तिमुपगते च तेषामतिमधुरे स्तुतिपाठकोलाहले सरस्वतीभवनस्थितश्रीसद्गुरुकरकमलाकृष्टरज्जुतया मदीयविद्यालयद्वारावलम्बिनी घण्टा राजकुमारविद्यालयद्वारावलम्बिनी घण्टा च युगपट्टंकाररवमकरोत् । यस्य श्रवणेन समाह्वयन्ति गुरव इति ज्ञात्वा सद्यः सोत्साहं सानन्दं स राजकुमारः सरस्वतीभवनमगच्छदहं च समगच्छम् । देवि ! किमहं तस्यं सरस्वतीभवनस्य शोभां वर्णयामि । अष्टदलपद्माकृतिमति यत्र सरस्वतीभवने एकतः सकला वेदा एकतोऽखिलाः पुराणेतिहासा एकतोऽशेषाणि शब्दशास्त्राणि एकतो निःशेषाणि तर्कशास्त्राणि एकतो निखिलानि वेदान्तशास्त्राणि एकतः समग्राणि धर्मशास्त्राणि एकतः समस्तानि योगशास्त्राणि एकतः कृत्स्नानि ज्योतिःशास्त्राणि एकतः सर्वाणि काव्यकोशकथाकथानकचम्पूनाटकानि च समुल्लसंति । यत्रानेकमणिमालालङ्कृतपर्यंते महति मणिमयादर्शे प्रकीर्णानर्घ्यमणिमौक्तिकप्रकरसिकतिलपुलिनचतुष्टये मानससरसि मरालबालमारुह्य तरन्तीव शरन्निशाविकसितानेकतारकानिकरे वियति विहरन्तीव

नयनान्याल्हादयति भगवत्याः सरस्वत्याश्चित्रमयी मूर्तिः । यत्र तस्मात्सरस्वतीचित्रादर्शादधः सुवर्णमये सिंहासनेऽस्मद्गुरुभिः परया गुरुभक्त्या स्थापिता स्वकीयदयालुदैशिकानां चन्द्रकान्तमणिमयीमूर्तिरतिभव्या दर्शनादेव दर्शनागतानां मानसानि परमानन्दनिमग्नानि विदधाति । यस्याः प्रतिरात्रि सति चन्द्रोदये चन्द्रकिरणसंयोगान्निर्गलितो निर्मलः सलिलप्रवाहस्तेषां परमगुरूणां प्रतिरोमकूपव्याप्ताकम्पानुकम्पापीयूषप्रवाह इव ज्ञानरसपूर्णाऽगाधहृदयनदनिर्गतनिर्झरनिकर इव मानसमहासागरसमुच्छलत्सौशील्यरसाभङ्गतरङ्गप्रकर इव प्रवहन्पूरयति मणिमयप्रणालीपरम्परया स्फटिकमणिनिबद्धां क्रीडादीर्घिकाम् । यत्र समंतात्समस्ताभित्तिशिला गीर्वाणवाणीनिबद्धैर्गद्यपद्यमयैः सदुपदेशलेखैरेवाङ्किता विलसन्ति । यस्योपरिगतं भूमिकाद्वयं गुणदोषदर्शनायास्मद्गुरुभिः संग्रहीतैः सकलजगज्जातैर्वस्तुजातैः पूरितमस्ति । यत्रानुदिनमेकमेकं क्रमशः प्रदर्श्य वस्तु प्रस्तुवन्ति तद्गतान् गुणान्दोषान्तदुपयोगांश्च दयालवो देशिका नः । यत्रैव चास्माकं श्रीसद्गुरवो निर्व्यलीकगुरुभक्तिप्रवणांतःकरणतया स्वकीयसद्गुरुमूर्तेरविघ्नदर्शनानुभवानन्दाय निवसन्ति । किंबहुना केवलं तद्वर्णनमेव कुर्यां चेन्महांस्तद्विषयो ग्रन्थः स्यात् । सांप्रतमेतन्न सांप्रतमप्रयोजनं चेति जानन्नपि प्रसङ्गात्स्मृतिमुपगतस्य तस्य स्वाभाविकस्नेहवशादेतावद्वर्णनमकरवम् । इदानीं प्रकृतमनुसरामि । तत्र प्रविष्टयोरेवावयोः सद्गुरूणां तदीयोभयपार्श्वस्थितयोरदृष्टपूर्वयोरतिभव्यवेशयोश्च कयोश्चन पुरुषयोर्दर्शनमभवत् । अपरिज्ञातज्ञातिगोत्रकुलनाम्नोरपि तयोर्विषये गुरुचरणेष्विव निर्व्यलीका भक्तिर्दर्शनादेवावयोर्बभूव । तयोरपि स्नेहार्द्रा दृष्टिः सानन्दबाष्पपातं पपातावयोरुपरि । यद्यपि कावेतौ कुत आगतौ किमर्थमागतौ कियत्कालमत्र स्थास्यत इत्यखिलं ज्ञातुं सोत्कण्ठमभवन्मानसं नौ तथापि किमर्थं गुरूणां स्मरणपदाधिरूढावावामिति न ज्ञात्वा न प्राप्य च दैशिकनिदेशं कथं विषयान्तरेऽवतरेव इति

विचार्य केवलं गुरुभ्यः साष्टाङ्गपातं प्रणम्य आर्याः सोऽयं राजकुमारः शत्रुशल्यस्तदनुचरश्चाहं सत्यशील आज्ञाप्यतामाज्ञाप्यमिति मयोक्ते वत्स शत्रुशल्य ! वत्स सत्यशील ! अद्यावधि ये ये मया युवाभ्यामुपदिष्टाः सत्पुत्रधर्मास्तदनुसारेण कुत्र वर्तितव्यं भवद्भ्यामिति किंस्विज्जानेते भवन्तौ ब्रूतमिति समाज्ञापयामासुर्नौ गुरुचरणाः । परमकृपापीयूषपारावारा आर्या ! युष्मासु युष्मद्धर्मपत्नीषु च यावज्जीवं पुत्रधर्मानुसारेण वर्तितव्यमावाभ्यामिति निःशङ्कं जानीवहे यत आवां युष्माकं पुत्रौ स्व इति सप्रणयमावाभ्यां प्रार्थिताश्च गुरुवर्या हर्षाश्रुवर्षा नयनयुगलेन वहंतो वात्सल्यरसविवशाशया दयार्द्रया दृशा नौ विलोक्य वत्सौ ! युक्तमुक्तं वत्साभ्याम् । ययोरुपर्यद्यावधि युवाभ्यां मातापितृबुद्धिः प्रबद्धास्ति तयोरावयोर्युवां धर्मपुत्रौ स्थस्ततो मयि मम धर्मपत्न्यां च सत्पुत्रधर्मानुसारेण भवतोर्वर्तनमुचितमेव । परं याविमौ सांप्रतमेतत्सरस्वतीभवनं स्वसमागमने संभूषयतस्तावभिजानीथः किंस्विद्वत्सौ ? इति प्रेमपूर्वं पृष्टाभ्यां चावाभ्यां दयार्द्रदैशिकवर्या ! यद्यपि अभूतपूर्वमेषां दर्शनं ततः के ते इति नाभिजानीवहे तथापि शास्त्रोक्तैर्लक्षणैस्तु ये युष्माकं दक्षिणपार्श्वस्थास्ते केऽपि राजर्षिवर्या ये च वो वामपार्श्वस्थास्ते केऽपि ब्रह्मर्षिवर्याः सन्तीत्यनुमीयते । दर्शनादेवैतेषां युष्मास्विव तेषु जृम्भते नौ भक्तिः । तेषां च युष्माकमिवास्मासु निपतन्त्यविरतं स्नेहसान्द्रा दयार्द्रा दृष्टिवृष्टिः । किमस्य कारणमिति ज्ञातुमातुरावपि विना युष्मदाज्ञां प्रसङ्गान्तरप्रवेशोनोचित इति विचिन्त्याद्यावधि तूष्णीं स्थितौ स्वः । इदानीं कावेतौ महानुभावौ कथमावयोरुपरि तयोर्निर्निमित्ता नैसर्गिकी च वत्सलता कथमावयोश्चैतयोरुपरि निर्व्यलीका भक्तिरनुक्षणमेधत इत्येतत्कथनानुग्रहेणापारतरोपकारभारधारिणौ नौ करिष्यथेत्याशास्वहे। इत्युक्त्वा मौनमालम्बमाने मयि राजकुमारे च वत्स शत्रुशल्य ! असमसमररससाहससमुत्सारितसमस्तसपत्नजनतमःस्तोमस्य क्षत्रकुलकैरवसोमस्य महानुभा-

वस्य महाराजस्यास्य चन्द्रकीर्तेस्त्वमस्यौरसः पुत्रस्ततः प्रणम्य तच्चरणौ कृतार्थयात्मानम् । पुत्र सत्यशील ! निगमागमापारपारावारसारपारङ्गप्रज्ञस्य महानुभावस्यास्य सुव्रतस्य त्वमस्यौरसः पुत्रस्ततस्तदीयपादारविन्दयुगलमभिवंद्य कुरु कृतार्थतामात्मन इत्याज्ञप्तौ गुरुवर्यैः सानन्दं सभक्त्युद्रेकं सप्रणयप्रसरं च दण्डवत्तच्चरणकमलयुगलयोरपतावः । अमन्दानन्दाश्रुसलिललोललोचनाश्च ते शुभाशीःसन्दोहप्रदानपूर्वं स्वसमीपोपवेशनायाज्ञापयामासुः । यथातदाज्ञमुपविष्टौ नौ वत्सौ शत्रुशल्यसत्यशीलौ ! जन्मदयोर्वां जनन्योर्दर्शनानन्दमपि राजधान्यामनुभविष्यथः । अतःपरमद्यावधि यथामदीयचरणपरिचर्यापरायणौ मदीयाज्ञापालनप्रवणौ मनोवाक्कायकर्मभिश्च मदीयप्रियहितनिःश्रेयसाभिलाषिणौ स्थस्तथैव युष्मत्तातचरणानां चरणपरिचर्यापरायणाभ्यां तदीयाज्ञापालनप्रवणाभ्यां मनोवाक्कायकर्मभिस्तदीयप्रियहितनिःश्रेयसाभिलाषिभ्यां च भाव्यमायुष्मद्भ्याम् । किंच यथाऽत्र युष्मद्धर्ममातुश्चरणपरिचर्या विधीयते तथैव तत्र स्वस्वजननीपदपद्मपरिचर्या परमेण प्रेम्णा विधेया । इत्युक्त्वा मौनमालम्बमानेषु गीर्वाणगुरुसमानेषु तेषु आर्या गुरुवर्या ! युष्मदीयामिमामाज्ञां शिरसा वहाव इति साञ्जलिबन्धं सप्रणयं प्रार्थिताश्च ते वत्सौ ! सांप्रतं युवां ज्ञातज्ञेयावधीताध्येतव्यौ च स्थस्तथापि वत्सलतापरवशोऽहं यत्किंचिद्वदामि तत्स्वहृदयएव धारयिष्यथ इत्याशासे । नैतदविदितं खलु दीर्घायुष्मतोर्भवतोर्यत्सत्यमेव निधानं श्रेयसां शौचमेवास्पदं संपदां अहिंसैव हितकरी प्राणिनां अस्तेयतैव शस्ताभ्युदयेषु ब्रह्मचर्यमेव वर्यमार्यैः, अप्रतिग्रहएव गृहं श्रियामिति । अतो युवाभ्यामहिंसासत्यास्तेयब्रह्मचर्याप्रतिग्रहपरिपालनप्रबद्धाग्रहाभ्यां भाव्यम् । न स्वप्नेऽपि परदारपरद्रव्यपरद्रोहपरायणांतःकरणाभ्यां भाव्यम् । येहि निजकुलदैवतचरणकमलसपर्यासर्वस्वबुद्धयो गुरुषु मातृषु पितृषु च परमेश्वरबुद्धयो निजार्यसोदरेषु पितृबुद्धयो निजार्यसोदरपत्नीषु मातृबुद्धयो निजानुजसोदरेषु पुत्रबुद्धयो नि-

जानुजसोदरपत्नीषु दुहितृबुद्धयो निजसुहृद्बन्धुबान्धवेषु संपद्बुद्धयो निजसन्मित्रेषु च सर्वस्वबुद्धयोऽनुदिनं वर्तंते । ये च यशस्स्वेव सस्पृहा न शरीरेषु सद्गुणेष्वेव सलोभा न धनेषु क्रोध एव सक्रोधा न जनेषु मत्सर एव समत्सरा न परोत्कर्षे ईर्ष्यायामेव च सेर्ष्या न परगुणेषु विलसन्ति । येषां च सत्कीर्तिरेव कामिनी सद्विद्यैव दैवतं कवितैव साम्राज्यं शास्त्राण्येव मित्राणि सद्गुणा एव कोशाः सर्वभूतदयैव हृदयसर्वस्वं विश्वहितेच्छुतैव प्राणसर्वस्वं परदुःखदुःखितैव जीवितसर्वस्वं परार्थ एव च स्वार्थः समुल्लसति । त एव साम्राज्यसंपदामास्पदतां सकलश्रेयसां सद्मतां परमेश्वरप्रसादानां पात्रतां चाधिगन्तुमर्हन्तीति निखिलागमेतिहासपुराणेष्वधीतमेव भवद्भ्यां तथाप्ययं मे परमश्वरमश्चोपदेशः । यदस्मिन्नसारेऽपारे च संसारपारावारे समुत्तीर्य न वयं चेत्करिष्याम इतरजनदुष्कराणि सकललोकहितकराणि सत्कार्याणि तर्हि वंचिता विद्वत्ता निष्फला शास्त्रज्ञता निरर्थाश्च गुरूपदेशास्तद्वत्सौ ! यावज्जीवं परोपकारपरम्पराकरणपरायणान्तःकरणौ भूयास्तं यानि चाद्यावध्यधीतानि निगमागमेतिहासपुराणानि तदनुसारेणैवाषष्ठीवर्षावधि वर्तितव्यं ततःपरं च परमेश्वरसमर्चनैस्तच्चरणध्यानैस्तद्गुणगानैस्तत्कथाश्रवणैर्वेदान्तविचारैर्वा वयः क्षयमुपनेयम् । किंबहुना प्राणव्ययेनापि परेषां प्रियाणि हितानि च विधेयानि । इत्युदीर्य प्रणतस्य राजकुमारस्य करं महाराजस्य चन्द्रकीर्तेः करे मम च करं मत्पितुः करे दयार्द्रहृदयास्ते समर्पयामासुः । ततोऽतिप्रसन्नस्वान्तेन महाराजेन मत्पित्रा चेश्वरनिर्विशेषधिया समर्पिताः सपर्याः स्वीकृत्य सानन्दं साशिःप्रदानं सप्रेमाश्रुसलिलालोकं स्वौरसपुत्रयोरिवावयोर्वियोगदुःखेनोद्विग्नचित्तैः कथंकथमपि धैर्यमालम्ब्य वत्सौ ! स्वस्वतातचरणैः सह प्रयातमात्मतातचरणराजधानीं शिवाः सन्तु वः पन्थानो रक्षन्तु वः सर्वाः कुलदेवताः । इति सबाष्पकण्ठं श्रीदैशिकैः श्रीदैशिकधर्मपत्नीभिश्चाज्ञप्तौ तेभ्यस्ताभ्यश्च साष्टाङ्गपातं सभक्त्युद्रेकं च भूयोभूयः

प्रणम्य कृत्वा च पाठशालायै पाठशालानिवासिभ्यश्च सहाध्यायिभ्यः सर्वेभ्यः प्रयाणप्रणामाञ्जलीन् प्रस्थितावावां यदा पाठशालातस्तदा यथैकतोऽस्मन्मनसि चिरात्तदहरेव संप्राप्तेन तातचरणानां दर्शनेन सद्योभाविना च मातृचरणानां दर्शनेन कोप्यननुभूतपूर्व आनन्दसुधासमुद्रः समुच्छलितस्तथैवान्यतः सफलीकृतास्मज्जन्मजीवितानां विस्मारितास्मज्जन्मदजननीजनककृतलालनपालनप्रपोषणसुखानां निष्कारणाविष्कृतवात्सल्यरसविवशाशयानां श्रीसद्गुरूणां श्रीसद्गुरुपत्नीनां च कोऽपि वियोगविषादविषमविषोदधिः समुच्छलितः । यत आविद्यालयप्रवेशवासराद्द्विशतिवर्षावधि नानुभूतः पूर्वं तेषां तासां च क्षणमपि वियोगः कदाचिदप्यावाभ्यां ततो भाविनार्यगुरुत्रयवियोगेन शून्यमखिलं पश्यतोरावयोः स्वान्तममन्दानन्दमयेपि निःसीमोत्साहमयेपि समये तदानींतना निरानन्दता निरुत्साहता शून्यचित्तता च स्ववशे चक्रे । निरवद्यातिहृद्याद्विद्यालयाद्बहिर्निर्गमनं तु स्वकृतसुकृतशतक्षयात्सुरपुरतः पतनमिव प्राज्यसाम्राज्यसिंहासनाच्च्यवनमिवातिदुःसहदुःखदं बभूव । पदात्पदमपि चलितुमशक्तौ हा कदा पुनर्दयालुदैशिकपदपद्मपरिचर्यासुखमनुभविष्याव इति मुहुर्विलपन्तावविरलगलद्बाष्पसलिलारुणलोचनौ च नौ समाश्वासनपरैः परःशतैः सदुपदेशवचनैः समाश्वास्य रथारोहणायास्मद्गुरव आज्ञापयामासुः । ततोऽनुल्लङ्घनीया गुरूणामाज्ञेति कथंकथमप्यारूढे रथ आवाभ्यां प्रतिनिवृत्तेषु गुरुवर्येषु तेषामेवाज्ञया चाक्षीरवृक्षजलाश्रयं प्रणयादनुगम्य प्रणम्य च स्नेहार्द्राशयेषु पाठशालां प्रतियातेषु सर्वेषु सवयस्सु विजितगन्धरथेन रथेन प्राप्ता वयं कौशाम्बीं नाम नगरीम् । तदवसरे च तत्रत्याभिः प्रजाभिः परमेण प्रेम्णा रचिताया नगरशोभाया वर्णनं कर्तुं न सांप्रतं प्रभवामि । किंच ताभिरस्मासु या प्रीतिर्या भक्तिर्या च श्रेयोभिलाषिता प्रदर्शिता सा काप्यद्भुतैवासीत् । शुभेऽन्हि शिवे मुहूर्ते कल्याणलक्षणे च क्षणे प्रमुदितपौरजानपदजनतातिसंकीर्णा

विचित्रासंख्यध्वजपताकावलीविराजितां प्रदीप्तदीपावलीप्रकाशपरिपीततमःस्तोमां अगणितफणिगणफणमणिमालाकिरणकवलिततिमिरां नागराजराजधानीमिव तां राजधानीं प्राविशाव । क्रमेण राजमार्गेण सप्रमोदैः पौरैर्जानपदैश्च जनैरालोक्यमानौ वन्द्यमानावभिनन्द्यमानावाशीश्चयैर्युज्यमानौ चान्तःपुरं प्रविश्य हर्षाश्रुसलिलकलाकुललोचनानां मातॄणां चरणकमलदर्शनेन यंकमप्यानन्दमन्वभवाव न तं वर्णयितुं शक्नोति मे जिह्वा । ततश्च त्वरितमप्रतिमप्रेमपीयूषपूर्णाशयो महाराजः श्रीचंद्रकीर्तिर्मद्रमहीमहेन्द्रस्य हेलाविजितवैरिवीरसेनस्य वीरसेनस्य पुत्र्या चन्द्रप्रभया सहास्य राजकुमारस्य मद्रमेदिनीन्दोः पवित्रमित्रस्य शंभुशर्मणः पुत्र्या प्रियंवदयासह मम च पाणिग्रहणमहामहोत्सवं निर्वर्तयामास । तदीयं च वर्णनमिदानीमप्रयोजनमिति विरम्यते । एवं पितृचरणानां मातृचरणानां च प्रसादात्पराः सुखपरम्पराः समनुभवतोरावयोर्व्यतीयुरमन्दानन्दपात्राणि गणरात्राणि । एकदाचाभूदभूतपूर्वो दुःखैकहेतुः क्षणार्धविरहासहिष्णुमप्यमुं जनं परित्यज्य वनं गन्तुमभिलाषोस्य राजकुमारस्य । स च प्रारब्धप्राबल्याद्दैवेच्छानियोगात्तादृशभविष्ययोगाद्वा सर्वैरप्यस्माभिर्निर्विवादं स्वीकृतः । सोऽपि राजकुमारः कतिपयपदातिपरिवृतो निष्प्रतिमरयशालिनं हयमारुह्य महावनविहाराय नगरान्निरगच्छत् । नासायंसमयमपि तन्मुखदर्शनसुखमुपलब्धं मन्दभाग्येन मया । तत्तदशोभनमाशङ्कमानस्यानन्तचिन्तासन्तानसंतप्तस्वान्तस्य विविधविपरीतविचारव्याकुलतया च प्राप्तनिद्रादारिद्र्यस्य मम कल्पकल्पारात्रिः कथंकथमपि व्यतीयाय । द्वितीयेऽन्हि प्रातःसमये स्नानसंध्योपासनशिवपूजनादीनि नित्यकृत्यानि परिसमाप्य सभामण्डपमलङ्कृतवति श्रीमति महाराजे चन्द्रकीर्तौ तदीयसिंहासनसमीपमुपेत्योपविष्टे समस्तमन्त्रिमण्डलालङ्कारे महामन्त्रिणि सुव्रते सुव्रते स्वस्वस्थानस्थितेषु महाराजपरिजनेषु च समागताः पदातयस्ते ये पूर्वेद्युः कुमारेण सह वनमगच्छन् । राजमार्गेणागच्छतां निरुत्साहं

निस्तेजसं कुमारशून्यमश्रुवदनमपरमिवाश्वमाकर्षतां कुमारानुयायिनां तेषां हर्ष-शून्यैः साश्रुसलिलैः सनिःश्वासपरम्परैर्दुःसहदुःखभरादिवातिनम्रैर्वदनैस्तया च कुमारतुरङ्गमावस्थया निवेदितात्याहिता इव सभयहृदयाः सकम्पसकलगात्रा अस्तोकशोकपात्रायमानमानसाः किमेते वदिष्यन्तीत्युद्वेगात्तदाननिबद्ध-निश्चललोचना मूढा इव मूका इवान्धा इव बधिरा इव स्तब्धा इव भूताभि-भूता इव च बभूविम । नास्माकं मध्यात्कोऽपि क कुमारः कथं विना कुमारं यूयमिहागताः किन्निमित्तं गलदविरलाश्रुसलिलानि वर्षति वो लोचनानि किमर्थमूरीकृतौदास्यदास्यानि युष्माकमास्यानि का च प्रवृत्तिः कुमारस्ये-त्यादिकिमपि तान् प्रति प्रष्टुं प्राभवत् । ते तु देवचन्द्रकीर्ते ! युष्मदाज्ञां शिर-स्याधाय पवनजवनं वाजिनमारुह्य गच्छन्तमनुगच्छद्भिः कुमारमस्माभिरसंख्य-शाखिशाखासहस्रसंच्छादितस्य तालतमालमालाङ्कृतस्यातिघनस्य विजनस्य वनस्य मध्ये दृष्टः कोऽप्यदृष्टपूर्वो भानुमण्डलचुम्बिसानुसहस्रशोभाखर्वीकृतस-र्वपर्वतगर्वसर्वस्वः पर्वतपुरुहूतः । विलोक्य यं कुमारो वत्सा ! यूयमिहोपविशत क्षणमश्वमेनमालम्ब्य तावदहं तु शिखरिणोऽस्य सज्जनमनोवृत्तिमिवातिगम्भीरां गुहां प्रविश्य विलोक्य च तत्र किमस्तीति त्वरिततरमागमिष्यामीति समाज्ञाप्या-स्मान् तद्गुहां प्रविष्टो नाद्याऽपि प्रतिनिवृत्तश्च । ततस्तत्र पञ्चपदातीन् गुहा-मुखेस्थापयित्वैतद्वृत्तांतनिवेदनायैवागता वयमतःपरं यथाज्ञादेवस्येत्युदीर्य गल-दविरलनयनजलास्तूष्णीं बभूवुः । तद्वचनविरामोत्तरक्षण एव राजा राजपत्नी प्रधानः प्रधानपत्नी चन्द्रप्रभा प्रियंवदा चाहं च मूर्च्छावेशवशा वि-स्मृतविवेका युगपदेवावनौ न्यपतामः । मुहूर्तात्प्राप्तसंज्ञश्चाहमेकतो हा वत्स शत्रुशल्य क गतोऽसि । कथं नाद्यापि पुनः प्रतिनिवृत्तः क ते मातृवत्सलता प्रोषिता कथमिमा विलपन्तीस्ते दुःखदीना जननीरपि विलोक्य नोदयते हृदये दयांकुरः । अथवा प्रतिपालयास्मान् वयमपि त्वयैव सहागमिष्याम इति कु-

मारमातॄणां विलपितानि । अन्यतो हा शुष्कः शब्दरत्नरत्नाकरो भग्नः कवितालताश्रयः कल्पद्रुमः प्रणष्टः प्रज्ञानां विश्रामारामो विशीर्णः सद्गुणमणीनां राशिर्मूषितं सुशीलतासर्वस्वं चेत्यादीनि सङ्घीभूतानां विदुषां कवीनां च विलपितानि । अपरतो हा विद्योदयैकबंधो सद्गुणसिन्धो राजकुमार ! निराधाराद्य कन्याशाला निरालम्बा पाठशाला निराश्रया विद्वत्परीक्षा हता गुणज्ञता तवामुनाऽदर्शनेन हा हन्तेदानीं को नः करिष्यति परीक्षां को विलोकयिष्यति वैदग्ध्यं कोवार्पयिष्यति पारितोषिकाणि विद्यार्थिभ्यः को देशः सांप्रतं पवित्रतापात्रतां नीतो भवता निजचंक्रमणक्रमेण कतमा पाठशालालंक्रीयते के वा विद्यार्थिनः परीक्ष्यन्ते इत्येतन्निवेदय दयया येन तत्राप्यागत्य भवन्मुखदर्शनसुमनुभविष्यामेति सवयसां विद्यार्थिनां विलापान् । इतरश्च हा हंत शून्यः संसारो निष्फलं जीवितं निरर्था विद्या वन्ध्यं जन्म दुःखदं राज्यं मन्दया मूढया मयाऽध्ययनभंगभयात् कृतपाणिग्रहणायापि देवाय कन्याशालानिवासव्यसनमुत्सृज्य न दत्तमधीतविद्याविनोदसुखं क इदानीमस्याह्वद्याया अपि विद्याया उपयोगः । अथवा किमिदं प्रलपामि अस्त्येव तस्या महानुपयोगः प्राणवल्लभ ! न यावद्यूयं देवाङ्गनाविद्याविनोदलुब्धचित्ता भविष्यथ तावद्देवाह्वमागत्य विस्मृतदेवाङ्गनाविद्याविनोदचमत्कारान् युष्मान् कर्तुं प्रभवामि भगवत्या गुरुपत्न्याः प्रभावात् । प्रिये चंपककलिके ! प्रियाऽसि मे प्राणेभ्योप्यनुजानीहि मां मरणाय सखि रसालमंजरि ! प्रणमामि त्वां प्रणम्यौ मे मातापितरौ वत्से कुन्दकलिके ! प्रेम्णा परिचर्यां कुर्या गुरुपत्न्याः सखि बकुलवल्लरि ! बालोऽयं हरिणपोतकस्तपोवनं प्रेष्यः प्रियसखि रत्नमाले ! रत्नाभरणानि मे समर्पणीयानि विद्यालयवासिभ्यो विद्यार्थिभ्यो मुक्तालते ! मुक्ताहारा मे देयाः परीक्षावसरे कन्याशालायां कन्याभ्यः प्रियसख्यः ! सर्वस्वं मे बालकाध्ययनशालोपयोगि बालिकाध्ययनशालोपयोगि च यथास्या-

त्तथा विधेयं मत्संवर्धिताश्चामी पुत्रनिर्विशेषा भवननिकुञ्जतरवः सप्रणयमभिषिञ्चनीया मत्पालितेष्वेतेषु शुकसारिकामिथुनेषु पुत्रनिर्विशेषस्नेहाभिर्भाव्यं भवतीभिः श्वश्रूश्वशुरयोश्च मे परमेश्वरीपरमेश्वरयोरिव परमेण प्रेम्णा परिचर्या विधेया न मद्विरहदुःखं हृदये विधेयं स्मरणीया चाहं सतीजनपवित्रचरित्रावसरे सतीजनगुणवर्णनावसरे सतीजनगुणगानावसरे च । यथाशास्त्रपरिपालितपातिव्रत्यप्रभावात् संप्राप्तसुरपुरवसतीनां च सतीनां भवतीनां भविष्यति पुनः संगमः स्वर्गे मे । चरमोऽयं परलोकप्रयाणप्रणामो मे गुरुजनेभ्य इत्यादीनि मरणोन्मुखायाश्चन्द्रप्रभायाः करुणकरुणान्याक्रन्दनानि चाश्रृण्वम् । श्रुत्वा च तानि तानि हृदयभेदीनि विलपितानि पुनरपि मूर्च्छामीलितलोचने भूमितलमालिङ्गति सह सुशीलया देव्या देवे चन्द्रकीर्तौ मूर्च्छाहरैरुपचारैरपनीय तन्मूर्च्छां त्वरिततरमुत्थाय च आर्यपितश्चन्द्रकीर्ते मातः सुशीले मातरो राजपत्न्यो मातश्चन्द्रप्रभे आर्या विद्वांसः कल्याणाः कवयः प्रियवयस्याश्च विद्यार्थिनः! किमिदं युष्माभिरेकपदएवारब्धममङ्गलं । नैतदुचितं चेतसापि चिन्तयितु परं न युष्माकमपराधोऽत्र यस्मादकुशलशताशङ्कीनि सुहृदां चेतांसि भवन्तीति लोकप्रसिद्धमेव । परं सांप्रतं संधार्य धैर्यं कुमारः । क्व गतः कथमद्यापि न प्रतिनिवृत्तः कथं च तस्य गिरिगुहायामियान्विलम्बोऽभवत् कीदृशी च तत्र तस्य दशास्तीति सर्वमवगन्तव्यमेवास्माभिस्तत्र चायमेव प्रथमः कल्पो यन्मयैव तदन्वेषणाय गिरिगुहायां गन्तव्यं तत्प्रवृत्तिरुपलब्धव्या चेति मयोक्ते देवी सुशीला देवश्चन्द्रकीर्तिश्च सममेवोचतुः । वत्स ! भवन्मित्रस्य वत्सस्य शत्रुशल्यस्याकस्मिकेनामुना वियोगदुःखेन प्रस्थानाभिमुखमपि नौ जीवितं त्वदीयाननविलोकनैकावलम्बनमेव वर्तते तस्मिन्नपीदानीं दूरीभूते भवन्मुखदर्शनसुखे कीदृशी नौ भविष्यति दशेति वत्सेनैव विचार्यम् । नातो वत्सेनैकाकिना कुमारप्रवृत्तिप्राप्तये प्रस्थातव्यं किंतु

वयमपि सर्वे सहैवागमिष्यामेत्युक्त्वा श्रुतप्रज्ञनामानं प्रधानं मदीयतातपादानामनुजन्मानं राजधानीरक्षणायादिश्य पौरान् जानपदांश्च सर्वान् जनान् समाश्वास्य सुशीलाप्रमुखाभिः कुमारमातृभिः सुव्रतप्रमुखैर्मन्त्रिमण्डलैः सुनयनाद्याभिर्मंत्रिपत्नीभिर्धीरैर्वीरैर्गंभीरैश्च सामंतैर्भक्तैरनुरक्तैश्च सेवकैः सप्रियंवदया चन्द्रप्रभया मया च सह प्रस्थानमकरोन्महाराजः। प्रथमानुभूतगिरिवर्त्मभिः कुमारानुजीविभिः प्रदर्शितमार्गा वयं समुपहसितपवनैरतिजवनैर्वाजिभिर्मनोरथातीतपथैरथैश्च स्वल्पेनैव कालेन प्राप्तास्तस्य पर्वतसुपर्वणः सामीप्यम्। तदनन्तरं च देव चंद्रकीर्ते मातः सुशीले आर्यें चन्द्रप्रभे अयि दयामयाशयौ मातापितरौ! निबिडतमतमस्तोमदुष्प्रवेशातिदुस्तरा चेयं दरी दरीदृश्यते। नास्यां सर्वैरप्यस्माभिः सहैव प्रवेशः कर्तुं समुचितस्तत्सपरिवारैः सर्वैरपि युष्माभिर्धैर्यमालम्ब्य मदागमनावधि परमेश्वरपार्थनापैररत्रैव तावत् स्थेयं यावदहमस्यां गुहायां प्रविश्यान्वेषयामि मित्ररत्नं मे। सर्वेषां युष्माकमाशीर्निचयैरगण्यानां युष्मत्पुण्यानां प्रभावेण प्रतिदिनं भवद्भिः परमभक्तिभराराधितस्य भक्तवत्सलस्य भगवतः श्रीचन्द्रचूडामणेः करुणावलोकेन च संप्राप्तसन्मित्ररत्नस्त्वरिततरमेव युष्मच्चरणपरिचर्यासुखानि सह तेनानुभविष्यामीति निःशङ्कमवगन्तव्यम्। इत्यादिभिर्वचनैरितरैश्च सप्रणयैः सप्रणामैः प्रार्थनासहस्रैः कथं कथमपि महता प्रयासेन तदाज्ञां संपाद्य प्रविष्टोऽहं तस्यां गिरिगुहायां। निरतिशयांजनचयरचितमिव कालरात्रिकोटीकोटीकल्पितमिव राहुसहस्रसहस्रसंपादितमिव च केवलमंधकारमाचामितलोचनालोचनचातुर्यं लोचनगोचरमकरवम्। महताऽनेहसा निस्तीर्णतमःस्तोमश्चाहमपश्यं पद्मरागमणिमयमखिलं प्रदेशं तत्राप्यप्राप्तप्रियमित्रमुखदर्शनसुखः क्षणमपि न विश्रम्य द्वितीयं गिरिगुहामुखं प्राविशम्। पूर्ववदतिक्रम्य तत्राप्यध्वनि ध्वान्ताद्वैतमद्राक्षमस्फुटजलस्थलविभागं स्फटिकमणिमयमखिलं प्रदेशम्। अतिरमणीयेषु हृदयनयनसुखप्रदेष्वपि तेषु तेषु प्रदे-

शेषु मित्रविरहदुःखादुद्वेगाद्विषादाद्वैराग्याच्चादत्तदृष्टिः प्रविष्टस्त्वरापराशयस्तृतीयं गिरिदरीकुहरं दर्यौदर्यमुत्तीर्य सान्द्रतमं तमः समस्तमस्तगिरिमस्तकभाजि भगवति भास्वति समुदिते मुदिते च देवे रोहिणीहृदयिते तदीयकोमलकरनिकरनिदर्शितमार्गेण मया विलोकितमिदमिन्द्रनीलमणिमयमखिलं स्थलं समनुभूतं भव्यदिव्याकृतेर्भगवत्या दर्शनं लोचनयोरतिथीकृता चेयं प्रियवयस्यस्य मे लोकलोचनानन्दवर्षिणी महानीलमणिमयी प्रतिमा । न जाने किं केनापि शापयोगेन किं केनापि पापयोगेन किं केनापि स्थलप्रभावेण किं वास्मदीयमन्दभाग्यप्रभावेणायमेकपद एवेदृशीं दशामुपनीतः । हा किमतःपरं कर्तव्यं क गन्तव्यं कस्मै कथनीयमकथनीयमिदं दुःखम् । हन्त न संप्राप्यैतादृशं चित्रं पवित्रं च मित्रचिन्तामणिं किं गुरुजनानामग्रे मुखं दर्शयिष्यामि किं वदिष्यामि कथं च तानाश्वासयिष्यामि । किं तेन विना मे जीवितेनापि फलं। परिसमाप्तमिदानीं जीवितप्रयोजनं मे कथापथातीतमित्रविरहव्यथानुभवाद्वारं प्राणपरित्यागस्तत्प्रार्थये यदि कश्चिदपरोप्यत्रागच्छेच्चेदस्मदीयो जनोस्मदीयप्रवृत्त्युपलब्धये तर्हि तस्मै निवेदयिष्यत्यस्मदीयं वृत्तान्तमत्रभवती भवतीति यतो निष्कारणानिष्कृतवात्सल्यमनुभूतं भगवत्या अन्तःकरणं मया । इत्युक्त्वाऽविरलगलद्बाष्पजलप्लवमानलोललोचने गद्गदगलतया च मौनमालम्बमाने तस्मिन् भद्रमुख ! कास्मि कस्यास्मि कुतोऽत्रागतास्मीति न किंचिदप्यहं जाने । केवलं मुहूर्तादर्वाक् सायंसमये 'हा हन्त त्वादृशे मित्ररत्ने मद्विरहाधिना नष्टे, प्रणष्टमखिलं सत्यशील भविष्यति,' इति पद्योच्चारविरामक्षणएवेयं प्रकृतिपुण्याप्याकृतिरपुण्याया मम स्पर्शदोषादिवेदृशीं दशामाससाद । समासदं चाहं मनोवचोवर्ण्यलावण्यजलधेरगण्यपुण्यस्य तस्य दक्षिणकरस्पर्शपुण्यादिवेदृशीमुत्तमां दशाम् । विस्मयविस्मृतनिमेषा चाहं परितः पश्यन्त्यपि नान्यत्किंचिद्विनेमां प्रतिमामपश्यं । कोऽयं काऽहं कथमयमकस्मादसंज्ञः समभूत् कथं

चाहमकस्मात्ससंज्ञा समभवमित्यादिविचारपारावार एव यावन्निमग्नमानसा समासं तावद्भवद्दर्शनमभवदित्येतावदेव वेद्मि । यतो मदीयकरस्पर्शोत्तरक्षण एवायं महाभाग ईदृशीं दशामुपयातस्ततोहमपि भवदाश्रितमेवाध्वानमाश्रयिष्ये । ममापि किमिदानीं जीवितेन प्रयोजनम् । इत्युक्त्वा साश्रुसलीललोचना विरराम सा देवकन्या ।

सत्यशीलस्तु प्रियमित्रचिन्तामणे ! मरणावसरेऽपि नायमपुण्योजनस्ते हृदयाद्दूरं गतो हा धिक् कृतघ्नकलङ्कं मां य ईदृग्दशं प्रियमित्रं त्वां पश्यन्नपि प्राणीमीत्युक्त्वा त्वरितं चितां चकार । तस्याविदूरे देवकन्याऽपि चितां रचयांचकार । ततोऽतिस्वच्छसलिले सरसि स्नात्वा ज्वलज्ज्वलनज्वालातिकरालं चितामुखं प्रत्यागत्याबद्धकरकमलयुगलौ

न जाने कास्मि कस्यास्मि कुतश्चात्रागतेत्यहम् ।
तथापि राजपुत्रेऽस्मिन्मन्मनः प्रेमयन्त्रितम् ॥ १ ॥
तद्याचे विश्वविश्वेशं प्रति श्रीमत्सतीपतिम् ।
भवे भवेऽस्य भूपस्य भवेयमङ्गनेत्यहम् ॥ २ ॥
मृते मयि पितुः किं मे भवितेति न मे हृदि ।
व्यथा तथा यथा राज्ञश्चिन्तयानन्तयानया ॥ १ ॥
समदुःखसुखं महाजनानामिह मित्रत्वमिदं वचोऽस्तु सत्यम् ।
मयि चित्रपवित्रमित्ररत्नानयनाय द्युषदां सदः प्रविष्टे ॥ २ ॥
भूयोभूयोऽपि भूयासमस्यैव नृपतेः सखा ।
एतद्विश्लेषलेशोऽपि यावज्जीवं ममास्तु मा ॥ ३ ॥
इत्यर्थयामि जुह्वन् स्वं वह्नौ वह्निस्वरूपिणं ।
दीनबन्धुं दयासिन्धुं सदा शम्भुं सदा हृदा ॥ ४ ॥

इत्युक्त्वा देवकन्यासत्यशीलौ चिताप्रवेशाय यावच्चिताप्रदक्षिणां चक्रा-

ते तावदतित्वरितगतिः पद्मरागमणिगणगर्वसर्वस्वंकषलोचनलावण्यं नीलमणिनीलिमावलेपविस्मारकवपुः प्रभापुञ्जं परितः स्फुरद्वज्रमणिमहः सहोदररोममण्डलमण्डितं कमपि मार्जारं सुवर्णशृङ्खलानियमितमाकर्षन् कश्चिन्मूर्त इव तपोराशिस्तपस्वी दूरादागत्य मा वत्सौ प्राणप्रियजनवियोगेन प्राणप्रणाशं कुरुतम् । हंहो आत्मघातजन्यमंहो नयति निरययातनानिचयानगण्यपुण्यनिकरकरानपि नरान् तत्संधार्यं धैर्यमसह्यास्वप्यापत्सु संधार्या धीधनैः स्वासव इति नाविदितं युवयोर्विरम्यतामतोऽस्मात्प्राणपरित्यागसाहसाद्वत्साभ्याम् । भविष्यति भवतोर्भूयोप्यविलम्बेन वल्लभजनसमागम इत्युक्त्वा विरराम । ततश्च भगवन् दर्शनेनैव भगवतः कृतार्थावावां वचनरचनया चानयाऽविष्कृता निष्कारणकारुण्यपरायणांतःकरणतात्मन आर्येण । अपूर्वपरिचितेऽप्यस्मिन् जने निरवधिवात्सल्यसुधासान्द्रहृदयः को भवान् हृदयनयनप्रमोदप्रददर्शनः कोऽयं मार्जारो अदृष्टपूर्वेऽपि मयि निष्कारणाविष्कृतप्रीतिप्रसरा केयं देवकन्या प्रियवयस्यश्चायं मे कस्मादकस्मादीदृशीं दशामाससाद किमयं कोऽपि स्थलप्रभावः शापप्रभावः पापप्रभावो वा निःसंज्ञस्यास्य पुनः संज्ञाप्राप्तये कानि कानि साधनान्यनुष्ठेयानि कुत्र कदा कथं वा पुनस्तत्समागमानन्दमनुभविष्यामीति कथनानुग्रहं करिष्यत्यत्रभवान् भवानित्यनुभूतभवदीयदयोदयोऽयमाशास्ते जनः। इत्युक्तवन्तं सत्यशीलं वत्स! नायमवसरस्तत्कथनस्य तच्छ्रवणस्य वा क्रमेण सर्वमवगमिष्यसि । सांप्रतं तु पापोपनतानि किल दुःखानि पुण्यापनेयानि च पापानीति निगमागमपुराणेतिहासप्रसिद्धमेव तत्किमप्यप्रतिममुत्तमोत्तमं च पुण्यमारभस्व येन पापशापमुक्तस्ते प्रियवयस्यः पुनरचिरेण प्राप्तसंज्ञः पूर्ववदेव स्वान् गुरुजनान् स्वाः प्रजाः स्वीयां प्राणप्रियां स्वीयं प्रियमित्रं त्वां चानन्दयिष्यति । किं चेमां शिलां निर्भिद्य तेनाध्वना स्थलादस्माद्बहिर्निर्गम्य त्वया समाश्वासनीयाः स्वीया गुरुजनाः । नातःपरं कदाप्ययं त्रिगुहो गिरिमार्गः पुन-

रनुगन्तव्यो महाराजस्य चन्द्रकीर्तेः स्वान्ताश्वासनायेयं देवकन्या दिव्य ओतुश्चायं त्वया सहैव नेयो वक्तव्यश्च राजा राजन् एषा देवकन्यापि यामद्वयादर्वागिन्द्रनीलमणिमयी शालभञ्जिकासीदिदानीं सैव यथा स्वकृतसुकृतशतप्रभावेण भव्यदिव्यदेहा भूत्वाऽस्मल्लोचनान्यानन्दयति तथैवागण्याप्रतिमपुण्यानुभावेन प्रमुक्तनीलमणिमयभावो गलितपापशापशल्यः शत्रुशल्योप्यचिरेणास्माकं लोचनान्यानन्दसुधोदधिनिमग्नानि करिष्यत्येव । जगत्यस्मिन् सर्वेषां मनुजनुषां धैर्यमेवोत्तमतमं धनं ततो धीरैर्वीरैश्च नरैर्नात्मधैर्यस्थैर्यकोशः क्षयमुपनेय इति । ततश्च मद्दर्शितेनामुनाध्वना सर्वानपि ते गुरुजनानिहानीय दर्शयिष्यसीमां त्वन्मित्रप्रतिमां येन धृतधैर्यास्ते भविष्यन्ति । समर्चनीयमिदमनुदिनमिन्द्रनीलमणिमयं महेशलिङ्गं परमेण प्रेम्णा गुरुजनानां परिचर्या विधेया किमप्यप्रतिममुत्तमोत्तमं च सुकृतमजस्रमनुघस्रमादरेणाचरणीयं येन सर्वेषां युष्माकं श्रेयोभिवृद्धिर्भविता । धैर्यमालम्ब्यैवं कतिपये वासराः क्षयमुपनेयाः । केनापि कदाप्यत्र नासायं समयं स्थेयम् । मार्जारस्याप्यस्य वृत्तान्तं सर्वं सर्वेपि यूयं क्रमेणावगममिष्यथ । इत्युक्त्वा बिडालगलावलम्बिनीं चञ्चच्चामीकरशृङ्खलां सत्यशीलकरतले समर्प्य स्वयमंतर्दधे मुनिराजः ॥

अयि भूपालमौले कीर्तिपाल, तिरोभूते तपस्विशिरोभूते भूतेशभक्ताग्रेसरे तस्मिन् मुनिप्रवरे तद्वियोगविषादविषोदधिविलीनमपि देवकन्यायाः सत्यशीलस्य च स्वांतं तदाश्वासनवचनैरंकुरितोत्साहमिवासीत् । सत्यशीलस्तु देवि ! अद्यावधित्वहमेकाकी समासं येन किंकर्तव्यताविचारेषु मन्मन एव मे प्रष्टव्यमभूत् परं यतः प्रभृति जातं भगवत्या दर्शनं श्रुतानि दयार्द्राणि मधुराणि च वचनानि समवगतश्च चिताप्रवेशप्रोद्यताया अभिप्रायस्ततःप्रभृति प्रोषिता मे स्वतन्त्रता । नैतावदेव किं त्वार्यचन्द्रप्रभानिर्विशेषमान्यां मन्ये त्वां तत्पृच्छामि किमिदानीं विधेयं मयेति । श्रुतानि भगवत्या कृपालोस्तस्य

तपस्विनो वाक्यानि । दृष्टैव मित्रस्य मे दशा । वराकस्यास्य मार्जारस्य वृत्तान्तज्ञानं तु भविष्यत्कालाधीनतां बिभर्ति । मन्मनस्तु क्षणं सन्मित्रविपद्विलोकनव्याकुलतया प्रज्वलज्ज्वलनज्वालाजालप्रवेशाय सत्वरतरं भवति । क्षणं च मुनिमण्डलाखण्डलस्य तस्य सद्वचनरचनाधारेण गुरुजनानां चन्द्रप्रभायाश्च स्वान्ताश्वासनाय तत्समीपमुपसर्तुमुत्कण्ठते । एवं प्रतिक्षणप्रोद्भवन्नानाविचारप्रेङ्खोलखेलल्लोलचेतसं मामेकतरकरणायाज्ञापयतु देवी । इति सप्रणयं सप्रणामं च सौजन्यधन्यां देवकन्यां प्रति वाणीमभाणीत् । श्रुत्वा चैतत्सापि पवित्रसत्यशील ! यथा मद्दर्शनेन मद्वचःश्रवणेन मदाशयज्ञानेन त्वमसि मयि मान्यबुद्धिस्तथैव यदैव लोचनगोचराभवद्भवन्मुखमुद्रा मे यदैव श्रवणाभरणतामगमन्मृदुला मधुरा च भवद्वाणी मे यदैवाधिगतः सवृत्तान्तो भवदन्तःकरणाभिप्रायो मया तदैवालौकिकसौहृदरससान्द्रा त्वयि निबद्धा बुद्धिर्मे । इदानीं च चन्द्रप्रभानिर्विशेषमान्यां मन्ये त्वामित्युक्तवता वत्सेन परमसन्मानपदमारोपितास्मि । परमकृपालुपरमेश्वरप्रसादाद्भवतु भवद्वचः सत्यं पश्यतु च देव्या चन्द्रप्रभया मया च सहैकमासनमारूढं भवान् भवन्मित्रप्रवरम् । किंच नानादुःखमयेऽस्मिन् समये किं कर्तुमुचितमित्येतद्विषये सुज्ञविज्ञप्रज्ञावदग्रसरस्य भवादृशस्याग्रे स्वल्पज्ञा स्वल्पप्रज्ञा च काहं वक्तुं प्रतिवक्तुं प्रतिबोधयितुं वा तथापि मयि निबध्य मान्यबुद्धिं त्वया सविनयं पृष्टया मया यथास्वमत्यनुसारं वक्तव्यमेवेति वच्मि । महाभाग ! न खलु न विदितं वत्सस्य सुलभः प्राणपरित्यागो दुर्लभः सज्जनसमागम इति ततोऽसह्यदुःखसहस्राण्यप्यनुभूय प्रियजनसमागमाय प्रयतितव्यं । न महामुनेस्तस्य वदनारविन्दाद्वितथवागाविर्भावः संभवति कदाचिदपि ततस्तद्वचनाधारेण यथातदाज्ञं गुरुजनसमीपमेवोपसराव इति मे प्रतिभातीत्यवोचत् । ततश्च देवि ! युक्तमुक्तं भगवत्येत्युक्त्वा पादप्रहारेण मुनिप्रदर्शितां शिलां निर्भिद्य देवकन्यया बिडालबिडौ-

जसा च सह सहसा निरगान्नगविवरात् सत्यशीलः । निर्गत्य च नातिदूरस्थितं चन्द्रकीर्तिं सुशीलां च प्रणामप्रणतेन शिरसा प्रणम्य तत्समीप एवोपविवेश । शत्रुशल्यं विनाप्यागतं तं परमिव शत्रुशल्यं विलोक्य शत्रुशल्यसमागमनसमानेनानन्देनाभिनंद्य संभाव्य च पादप्रणतां देवकन्यां सन्मानदानेन समाहूय त्वरया नृपतिपरिवृढः प्रधानपरिवृढं सुव्रतं तद्धर्मपत्नीं सुनयनां च अतिनिकटपर्णकुटीतो झटिति निर्गत्य राजाभिमुखमायान्तमात्मपितरं तदनुवर्तिनीमात्ममातरं च विलोक्य सादरमुत्थाय तच्चरणयोर्न्यपतत्सह देवकन्यया सत्यशीलः । शुभाशिषा संयोज्य तं प्रणम्य राजानं राजसमीपोपविष्टः सुव्रतो वत्स सत्यशील ! क्व कुमारः कथं त्वया सह नागतः का प्रवृत्तिरुपलब्धा कुमारस्य केयं देवकन्या कथमनया समागमस्ते समभूत् कुतश्च समासादितोऽयमद्भुताकृतिर्मार्जारोयमित्येतत्सर्वं महाराजाय निवेदयेति तमाज्ञापयामास । श्रुत्वैतद्वचनं समुत्पन्नात्ममित्रस्मरणः सबाष्पसलिललोचनो मूढ इव मूक इवान्ध इव बधिर इव स्तब्ध इव न किमपि प्रतिवक्तुं प्राभवत् । सत्यशीलस्य तादृशीं दशामालोक्य स्वश्वश्रूसमीपादुत्थाय चन्द्रप्रभा मुकुलितकरकमला प्राब्रवीत् । देवि ! लोचनलोभिन्याकृतिरेव भगवत्या दिव्यतां निवेदयति । हर्षशोकोद्वेगादयो धर्माः परिभवन्ति मर्त्यशरीराणि न पुनरमर्त्यशरीराणि । यस्य वचनावलम्बानि गुरुजनानां मे जीवितानि सोयं सत्यशीलः स्वकीयसन्मित्रवियोगव्यथयेदृशां दशामनुभवतीति नाविदितं देव्याः । स खलु स्वमित्रान्वेषणाय गिरिगुहायां प्रविष्ट आसीत् तत्र तेन का स्वमित्रप्रवृत्तिरुपलब्धा कथं भगवत्या सह तस्य समागमोऽभूत् कासि कस्यासि कुत आगतासि केन कारणेनारण्यमिदमुपागता देवी तत्सर्वं निवेदयितुं देव्यैव श्रमः स्वीकार्यो येनापारमुपकारभारमानतेन शिरसा वहिष्यामि ते । स्वभावसुन्दरा तवाकृतिरेव विश्रम्भं जनयति नेमां मे प्रार्थनां निष्फलां करि-

ष्यतीति । चन्द्रप्रभायाः सुक्तिसुधामापीयापीयसंतुष्टस्वान्ता देवकन्या सखि चन्द्रप्रभे! धन्यः खलु सत्यशीलो यः स्वीयप्राणप्रियवियोगादीदृशीं दुर्दशामनुभवति । मदीयं हृदयं तु वज्रादपि कठिनं यत्तानि तानि वृत्तान्यनुभवदपि न शतधा भिद्यते । काऽहं कस्याहं कुतोऽहं केन कारणेनारण्यमिदमुपागतेत्येतद्विषये त्वहमपि त्वमिवानभिज्ञा । परमद्य सायंसमये 'हा हन्त त्वादृशे मित्ररत्ने मद्विरहाधिना, प्रणष्टे नष्टमखिलं सत्यशील भविष्यति;' इति वचनश्रवणोत्तरक्षण एव ससंज्ञाहमभवमपश्यं चेन्द्रनीलमणिमयीमसंज्ञां कामपि राजकुमारप्रतिमां ततःप्रभृति यद्यदहं वेद्मि तत्तन्निवेदयिष्यामि । इत्युक्त्वा सत्यशीलागमनादारभ्य चिताप्रवेशप्रारम्भसमकालसमागतमहामुनिवराज्ञया गुरुजनसमीपागमनपर्यन्तं सर्वं विस्तरेण तथा वर्णयामास यथा तेषां दुःखतीक्ष्णापि क्षणदा क्षणमिव क्षयमुपेयाय । समुल्लसत्यरुणोदये परितः श्रूयमाणे विचित्रपतत्रिकुलानां कलकलकोलाहले शनैःशनैरपसरति तिमिरपटले विधाय स्नानसंध्यादीनि नित्यकर्माणि निगममन्त्रानुच्चैरुच्चारयत्सु मुनिमण्डलेषु प्राभातिकरागेण भक्तैर्गीयमाने परमेश्वरस्तवनिवहे प्रातःसमयसमीरसमालिङ्गनात्किंचित्संप्राप्तस्वास्थ्यमिव सत्यशीलमालोक्य चन्द्रप्रभा वाचमुवाच । भद्रमुखयदि युष्मादृशा अपि विद्वांस एवं विपद्दशाविवशाशया भवेयुस्तर्हि निष्प्रयोजना विद्या निष्फला गुरूपदेशा निरर्था च वृद्धोपसेवा । यद्यप्यशङ्कं वेद्म्यहं न भवन्तं विपद्दशा व्याकुलयति किंतु सन्मित्रविश्लेषव्याधिरेव महाशयशिरोमणिमप्याकुलयति न चैतन्मित्रविपद्विलोकनव्याकुलतावलम्बनं दूषणं प्रत्युत मित्रधर्मानुसारेण भवादृशां भूषणमेवेति तथाप्येवं व्याकुलस्वान्ततयौदास्यदास्यमङ्गीकृत्य मूकमूढान्धबधिरनिर्विशेषां दशामनुभवति भवति कीदृशैषां चतुर्णामस्मद्गुरुजनानां भविष्यति मह्यं देव्यै चास्यै को धैर्यमर्पयिष्यति कश्च महामुनिवराज्ञानुसारेण भवदीयप्राणप्रियमित्रस्य पुनः समागमावाप्तये लोकोत्तरं

किमपि पुण्यं परमेण प्रेम्णा करिष्यतीति भवत्यैव चित्ते चिन्तनीयं । तदपास्य मनोगतमौदास्यमपसार्य शोकं निर्भर्त्स्य चैतां विपत्पिशाचीं संधार्यतां धैर्ये धियं जगत्यगण्यानां पुण्यानां मध्ये कतमं पुण्यमप्रतिममिति चिरं विचार्य प्रोच्यतामिति । चन्द्रप्रभोक्तिमाकर्ण्य सत्यशीलोप्यार्ये चन्द्रप्रभे! युक्तमुक्तं भवत्या त्वदुक्त्यनुसारेणातःपरं धैर्यमेव धारयिष्ये किंच सूक्ष्मया दृशा विचार्यमाणे विद्यादानसमानमन्यज्जगति नोत्तमोत्तममप्रतिमं च पुण्यमस्तीति मे प्रतिभाति । निगमागमेतिहासपुराणेष्वप्येतत्प्रसिद्धं । निर्व्यलीकभक्तिभरसंतुष्टसद्गुरुसदयावलोकसाधना सद्विद्या । साच प्रथमं साधनं परमात्मस्वरूपावाप्तेरिति । ततो विद्यादानमेव निःश्रेयसाभ्युदयनिदानम् । न भूदानं न काञ्चनदानं न रत्नदानं नान्नदानं न सर्वस्वदानमपि विद्यादानतुलामधिगच्छतीति निर्विवादम् । विद्यादानं हि दिव्यौषधमिव विद्यार्थिनां नैसर्गिकं रसायनसहस्रसेवनैरप्यनपनेयं अञ्जनशलाकाशतैरप्यनवलेप्यं कुण्ठिताखिलचिकित्सककुलचिकित्साकौशलमद्भुतमज्ञताप्रभवमसाध्यमांध्यमपसार्य तान् दिव्यचक्षुष इव सद्योविदधाति । तन्मयाऽऽश्रमवासिनां बालकेभ्यो विद्यादानं देयमत्रभवत्या भवत्या देवकन्यया चाश्रमवासिनां बालिकाभ्यो विद्यादानं देयमित्युक्त्वा विरराम । चन्द्रप्रभया देवकन्यया च सप्रणयं यथात्वदाज्ञं कर्तुमवहिते स्व इत्युक्ते सर्वानाश्रमवासिनो मुनीन् समाहूय सत्यशीलोप्ययि महात्मानः! वयं सर्वेपि सांप्रतं श्रीमतां सहवाससुखमनुभवितुमत्रैव कतिपयवासरावधि स्थातुमिच्छामहे । तन्मूलं तु राजकुमारस्य शत्रुशल्यस्य वियोगदुःखमेवास्तीति नाविदितं वः । किंच दुःखमयोऽयं समयो वनेस्मिन्ननायासेन क्षयमुपनेतुमशक्यस्तदस्मासु कृपां कृत्वा यदि युष्माकं बालकान् मह्यं बालिकाश्च चन्द्रप्रभायै देवकन्यायै समर्पयिष्यथ तर्हि तेभ्यस्ताभ्यश्च विद्या अर्पयतामस्माकं तत्प्रवणांतःकरणतया सुखनिर्गमनीया वासरा भविष्यन्ति । नैनमुपकारं च यावज्जीवं युष्माकं विस्मरिष्याम इत्युक्त्वा

विरराम । आश्रमवासिनो मुनयस्तु वत्स सत्यशील ! एतद्विषये त्वस्माभिर्भवदुपकारभारो यावज्जीवमविस्मार्य एव । यतोऽचिन्त्यचिन्तामणिरूपा हि सद्विद्या-सद्विद्यया सर्वाः संपदः समधिगम्यन्ते सर्वाणि सुखान्युपलभ्यन्ते निखिलानि दुःखानि दूरीक्रियन्ते राजभ्यो महाराजेभ्यो राजाधिराजेभ्योऽपि सन्मानपात्रता निखिलवसुन्धरावलयविख्याता दिगन्तकीर्तिमत्ता जन्मजरामरणाद्यनेकासह्यदुःखमुक्तिः स्वस्वरूपानुभवजन्याऽखण्डानन्दभुक्तिश्चार्ज्यते जनेन । या याः सिद्धयः सद्विद्यया संपाद्यन्ते तासां सहस्रांशोऽपि धनसंपदा संपादयितुमशक्य एव । रङ्करङ्कोपि विद्वान् सद्विद्यया निखिलाचलाचक्रचक्रवर्तिनोऽप्यधिकमानपात्रतामनुभवतीति केषामविदितम् । किंच कतिकति न तादृशा उपायाः सन्ति यैर्वयमुपकारकारिणामनृणा भवेम कतिकति न तादृशाः सन्त्युपाया यैर्वयं धनाश्रयप्रदानामनृणा भवेम कतिकति न तादृशाः सन्त्युपाया यैर्वयं विपत्सहायप्रदानामनृणा भवेम कतिकति न तादृशाः सन्त्युपाया यैर्वयं स्नेहिनां सत्कृत्येष्वकृतघ्ना भवेम कतिकति न तादृशाः सन्त्युपाया यैर्वयं सहोदरस्नेहरचितोपकारभाराणामनृणा भवेम कतिकति न तादृशाः संत्युपाया यैर्वयमभयदानामनृणा भवेम परं तादृशः कोस्त्युपायो येन वयं निर्निमित्तनिष्प्रतिमनिःसीमवात्सल्यविवशस्वान्तयोर्जन्मदयोर्मातापित्रोः सफलीकृतास्मज्जन्मजीवितानां दूरीकृतास्मदीयाज्ञत्वान्धत्वानां समर्पितसद्विद्यासाम्राज्यसुखानां श्रीसद्गुरूणामनृणा भवेम । न कोप्यस्तीति निर्विवादम् । न जातिर्न ज्ञातिर्न वंशो न कुलं न गोत्रं न शीलं न वयो न वपुर्न रूपं न गुणा न धनानि न वैभवा न जन्म न जीवितं च विनानवद्यया हृद्यया विद्यया शोभन्ते । बहुधनवन्तोऽपि सत्कुलवन्तोऽपि सुरूपवन्तोऽपि सुवयोवन्तोऽपि विना विद्यया पशुसमानमाना विद्वत्सभासु राजसभासु चोपहासास्पदतामधिगच्छन्ति । किं सुखं किं धनं कोभ्युदयः किं कल्याणं वेदृशं वर्वर्ति जगति यन्न विद्यया संपाद्यते । समर्पितैतादृशाप्रतिमप्रतापप्रोज्ज्वलत्सद्विद्याचिन्तामणीनां सद्गुरूणां विद्यार्थिनस्तु

जन्मशतैरप्यनृणत्वं नोपगच्छन्ति परं विद्यार्थिनां मातापितरोऽपि सुवर्णपूर्णं संपूर्णमम्बराम्बरावलयं स्वात्मजसद्गुरुभ्यः समर्प्य नतैः कृपयार्पितस्यैकस्याप्यक्षरस्यानृणत्वमुपगन्तुं प्रभवन्तीति मन्यामहे । अतोस्माभिरेवोपकारस्ते मन्तव्यस्तथापि यत्त्वमेवं ब्रूषे तत्तवैव महत्वम् । विद्याप्रदानप्रबद्धबुद्धीन् भवादृशान् सद्गुरून् विहायान्यत्र विद्याप्राप्तयेऽस्मद्बालकान् प्रेषयिष्याम चेत्के परेस्मादृशा मूर्खाणामग्रेसरा भविष्यन्ति तदयं शुभो दिवसः शिवो मुहूर्तः कल्याणी चेयं वेला समर्पिता अद्यैव बालका भवते कुमार्यश्च सदेवकन्यायै चन्द्रप्रभायै । इत्युक्त्वा सहागतान् कुमारान् कुमारीश्च समर्प्य सत्यशीलेन चन्द्रप्रभया च सादरं कृतप्रणामा मनयः स्वाश्रमान् प्रययुः । विद्यार्थमागतान् मुनिकुमारान् मुनिकुमारीश्च वीक्ष्य सत्यशीलस्य चन्द्रप्रभाया देवकन्यायाश्च हृदयं परमाह्लादसुधासमुद्रे निमग्नम् । दयार्द्रहृदया हि सद्गुरवः सच्छास्त्रसमागमे पुत्रजन्मजन्यानन्दतुल्यानन्दभाजो भवन्तीति तेन ताभ्यां च सानन्दं सोत्साहं सप्रयत्नपरंपरं च विद्यारत्नदानकर्म प्रारब्धम् । तस्यैव गिरिवरस्य समीपे परितः कुमारिकावासाय पर्णकुटीः कारयित्वा मध्ये सरस्वतीभवनाभिधानां पर्णकुटीं चन्द्रप्रभादेवकन्ययोर्निवासाय कारयामास । कुमाराणां निवासायापि तथैव परितः पर्णकुटीः कारयित्वा मध्ये सरस्वतीभवनाभिधानां पर्णकुटीं स्वनिवासाय कारयामास सत्यशीलः । कुमाराः कुमार्यश्च स्वस्वपर्णकुट्यां विद्याभ्यासंचक्रुः । प्रातः समयादारभ्या सायंसमयं तेषां तासां च नैकोऽपि क्षणो विद्याभ्यासवन्ध्यो व्यतीयाय नाप्येकोऽपि तेषां तासां च कोऽपि विद्याभ्यासप्रयासालस्यलास्यदः क्षणो बभूव । काप्यद्भुतैव तेषां विद्याध्यायनपरिपाटी यया विद्याध्ययनमयोपि समग्रः समयो नानानन्दमयः कुमाराणां कुमारीणां चाभूत् ! ब्राह्मे मुहूर्ते त्यक्तनिद्राणां विहितपरमेश्वरध्यानानां रचितस्नानसंध्याशिवपूजनानां उच्चैरुच्चारितपरमेश्वरस्तवनानां कुमाराणां समूहं सरस्वतीभवनम-

ध्यमानीय सत्यशीलो मुहूर्तं शब्दशास्त्रविषयं मुहूर्तं तर्कशास्त्रविषयं मुहूर्तं पूर्वमीमांसाविषयं मुहूर्तमुत्तरमीमांसाविषयं मुहूर्तं धर्मशास्त्रविषयं मुहूर्तं पुराणेतिहासविषयं मुहूर्तं काव्यकोशविषयं मुहूर्तं चम्पूनाटकरसालंकारविषयं च ज्ञानं तेभ्यः समर्पयामास । चन्द्रप्रभा देवकन्या च तेनैव क्रमेण तयैव पाठनपरिपाट्या कुमारिकाभ्यो विविधविषयं ज्ञानमर्पयामासतुः । अन्तरान्तरा च विद्यार्थिनां मनोविनोदाय तान् क्रीडानिकुञ्जमुपनीय तद्गतान्नानातरुगणान्प्रदर्श्य तद्गुणज्ञानं तद्दोषज्ञानं तदुपयोगज्ञानं च तेभ्यो विततार । पुष्पवृक्षाणां च सलिलसेकालवालपालीबन्धनाद्यासु संभावनासु तान् युयोज । क्षणमाश्रममृगाणां क्षणं कामधेनूनां क्षणं विहारसारिकाणां क्षणं लीलाशुकानां क्षणं केलिकलापिनां क्षणं सारसयुगलानां क्षणं मरालमिथुनानां क्षणं चक्रवाकचक्रस्य क्षणं चकोराणां च संभावनां कारयामास । कदाचिच्च संग्रहस्थानमानीय तान् तत्र स्थापितानां नानावस्तुव्रातानां गुणदोषोपयोगज्ञानं औषधिज्ञानं रसायनज्ञानं शारीरज्ञानमातङ्कनिदानज्ञानं च तेभ्यो वितरतिस्म परया प्रीत्या सत्यशीलः । कुमारिकाविद्यालये च चन्द्रप्रभा देवकन्या च कुमारिकाभ्यः सर्वाभ्य एवमेव विनोदसुखसहितं ज्ञानं ददौ न तत्र पठनपाठनक्रमः शुकपाठसमः समभूत् किंत्वनुदिनमधीयमाननिगमागमागतसदाचारानुसारिचरित्रपवित्राखिलविद्यार्थिलोक आसीत् । कोपि प्राणी न सरस्वतीभवने गीर्वाणवाणीमन्तरामन्यां वाणीमभाणीत् । कन्याशालायां भिषक्कृत्यकारिण्यः किंकरकृत्यकारिण्यः प्रतीहारकृत्यकारिण्यश्च स्त्रिय एवासन् । अधीताध्येतव्याभ्यो विवाहार्हवयोवतीभ्यः कुमारीभ्यः समुपदिश्य सौशील्यवसतीनां सतीनां धर्मान् विसर्जयामासतुश्चन्द्रप्रभा देवकन्या च ताः कुमारीः सरस्वतीभवनात् । सत्यशीलोऽपि ज्ञातज्ञातव्येभ्यो विवाहार्हवयोवद्भ्यः कुमारेभ्यः समुपदिश्यैकपत्नीव्रतप्रमुखमशेषं गृहस्थधर्मं विसर्जयामास तान् सरस्वतीभवनात् । एवमच-

लनियमानुसारेण निखिलदानप्रधानश्रेयोनिदानज्ञानदानमाचरतां तेषां व्यतीयुः कतिपयानि वर्षाणि । अन्येद्युश्च सकलसद्गुणपात्रेभ्यः श्रवणानन्दनिश्चलगात्रेभ्यश्छात्रेभ्य एकपत्नीव्रतविषयकं किमपि श्रावयतः सत्यशीलस्य स्मरणसरणिसरणप्रणयिनःसमासन् एकपत्नीव्रतपालनपरायणान्तःकरणादयोऽनेके प्रियमित्रस्य शत्रुशल्यस्य गुणगणास्तेनाकस्मात्तस्य रुद्धः कण्ठः प्रोद्भिन्नरोमाञ्चैः कञ्चुकितः कायो नयनाभ्यां प्रावर्तन्त वारंवारं स्फारस्फारा अश्रुधाराः । शून्यशून्यदशावशा चासीच्चेतोवृत्तिः संधार्य धैर्यं प्रवक्तुं कृतप्रयत्नस्यापि तस्य त्वेकपत्नीव्रतसपत्नैः सयत्नैरीर्ष्यया कीलितेवाक्रान्तेव विपर्यासितेव स्तम्भितेव निबद्धेव च नैकमप्यक्षरं प्रवक्तुं प्रह्वाभूज्जिह्वा । भूयोभूयः प्रयत्ने परंपरयैकमर्धं वाप्यक्षरमुच्चार्य मित्रगुणस्मरणविवशाशयतया सकम्पसकलगात्रस्य गलदविरलाश्रुसलिलस्य बद्धजिह्वस्य च तस्य तादृशीं दशां विलोक्यातीवोद्विग्नचित्ताः पुत्रनिर्विशेषा अधिगतसद्विद्यातिहृद्याशयाः शिष्याः शत्रुशल्यगुणस्मरणमेव मूलमस्यामुष्या दशाया इति निःशङ्कं जानन्तो भाषणप्रयासविरामाय गुरुवर्यं प्रार्थयितुं प्रेरयामासुर्ज्येष्ठं श्रेष्ठं च विद्यानिधिनामानं विद्यार्थिनम् । प्रणामप्रबद्धाञ्जलिः स चोत्थाय प्राब्रवीत् । परमदयालो गुरुवर्य ! इदानीं परमया कृपयास्मभ्यं समर्प्यमाणमेकपत्नीव्रतविषयकं भाषणमिदमदेवोच्छिष्टमदैत्यस्पृष्टमराहुगलग्रस्तमगरुत्मदाकृष्टमकपटकामिनीकरकमलकलितं च किमप्यन्यादृशमेवामृतं न यत्सुरलोके नागलोके चन्द्रमण्डले वा लभ्यते न यल्लवस्य रत्नकोट्योऽपि तुलाकोटिमधिरोहन्ति न यस्य हालाहलसहोदरता श्रूयते न यस्य मदिरया सह सहवासपरिचयो वा दृश्यते तादृशापूर्वममृतमातृप्ति पिपित्सूनामस्माकमतृप्तिर्विवर्तीति नाश्चर्यम् । तथाप्यस्मदमन्दमन्दभाग्येन भवदुपदेशामृतपाने विघ्न आविष्कृतः । याः सूक्तिमुक्ताः शत्रुशल्यसदृशस्य राजकुमारस्य मानसमध्यान्निष्क्रम्य भवादृशानां श्रवणाभरणतामुपयाता याश्च

सूक्तिमुक्ता भवादृशस्य मानसान्निष्क्रम्य शत्रुशल्यसदृशानां श्रवणाभरणतामुपयातास्ताः श्रवणाभरणतां नेतुं कुतोऽस्मादृशानामल्पज्ञानानामल्पभाग्यानां च भाग्यं भवेत् । यतो हृदयालयात्कण्ठद्वारमागत्य युष्माकं पुण्या वाण्येवास्माकमनधिकारितां निवेदयन्तीव न बहिर्निःसरति कृतार्थयितुमस्मान्मनोमन्दिरात् । प्रस्थिता च सा भवद्दृष्टियुगनिष्पतन्तीमश्रुसलिलानामकालवृष्टिमालोक्य दुर्निमित्तशङ्कितेव पुनरन्तःप्रविशति । तत्सर्वेऽप्यमी सवयसो मे विद्यार्थिनो मन्मुखेन प्रार्थयन्ति भगवन्तमिदानीमेतद्भाषणप्रयासविरामाय । यतोभाषणसमारम्भसमकालसमुत्पन्नसन्मित्रस्मरणजन्यविषमविषादविवशां दशां वो द्रष्टुमतः परं न पारयामः । यद्यस्ति नस्तादृशं भाग्यं यद्यस्ति नस्तच्छ्रवणाधिकारिता यदि जागर्ति च भगवतोऽस्मास्वनुकम्पा तर्हि सति भाग्योदये पुनःसंप्राप्तसंजीवनेन राजकुमारेण शत्रुशल्येन तेनैव सह भवन्मुखकमलान्निष्पतन्तीमुपदेशवाङ्मधुझरीं सानन्दमास्वाद्यास्वाद्य संप्राप्ततृप्तयो भविष्यामस्तदद्य त्यज्यतामेतद्भाषणकरणप्रयत्नो भगवता । इति विद्यानिधेर्वाक्यमाकर्ण्य वत्स विद्यानिधे ! भवतो भवन्मित्राणां चोक्तिर्युक्तैव परित्यक्तोयं मयोपदेशोक्तिव्यापारः पुनः कदाचित्सति प्रसङ्गे करिष्यामि । सांप्रतं तु सर्वेपि यूयं यावत्क्रीडोद्यानविलोकनविनोदेनानन्दमग्नानि मनांसि कुरुध्वं तावदहं शत्रुशल्यप्रतिमावलोकनेन भक्तजनभद्रंकरश्रीशंकरदर्शनेन च खिन्नमात्मानं विनोदयिष्यामीत्युक्त्वा सत्यशीलः शिवदर्शनाय शिवमन्दिरं विद्यार्थिनश्च क्रीडोद्यानमुपजग्मुः । गत्वा च तत्र नत्वा महानीलमणिमयं महादेवं मत्वा च तन्मन्दिरस्थां शत्रुशल्यप्रतिमामेव साक्षात्तिष्ठन्तं शत्रुशल्यं प्राब्रवीत्सत्यशीलः ।

अयि प्रियमित्रचिन्तामणे शत्रुशल्य ! भवत्समर्पितसदुपदेशसुधाञ्जनशलाकासहस्रसेवनसंप्राप्तहृदयचक्षुःप्रकाशः किमयं वक्तुं प्रतिवक्तुं वा जनः क्षमते तथापि सांप्रतं संप्राप्तभवद्दर्शनानन्दसंदोहसान्द्रहृदयो भवदुपदिष्टमेव किमप्य-

त्रभवते भवते भक्त्योपहारीकृत्य कृतकृत्यतामाकाङ्क्षते स्वात्मनस्तत्क्षन्तव्यम् । स्मरसि मित्र यत्पुरोपदिष्टं भवता स्वानुजनिर्विशेषवात्सल्यपरिपालिताय स्वमित्रायामुष्मै जनाय सखे! एकपत्नीव्रतमेव साधनं परमस्याभ्युदयस्य निःसीमनिःश्रेयससिद्धेश्च । एतत्खलु अदूरदेशाटनप्रयासं तीर्थं अवातवर्षातपसहनमपञ्चाग्निसेवनश्रममस्त्रयं शीर्णजीर्णपर्णपारणं च तपः अगुरुकुलवासक्लेशलेशमघोषश्रमं च महदध्ययनं अप्राप्तवलिपतितवैरूप्यमनारूढबाधिर्यमनधिगतान्ध्यमनासादितशरीरसन्धिशैथिल्यमनाप्तदन्तपतनं च वृद्धत्वं उपहसितचान्द्रायणं तर्जितप्राजापत्यं वराकीकृतपाराकं निर्जितसांतपनमवधीरितकृच्छ्मवगणितातिकृच्छ्माक्रान्ताशेषव्रतव्रातं च व्रतम् । एतस्मिन् किलाखिलव्रतचक्रचक्रवर्तिनि निखिलयमनियमनियन्तरि निःशेषनिःश्रेयससाधनशिरोमणौ महाव्रते स्वाश्रितस्वान्ताभिलषिताशेषश्रेयःपोषणाय प्रबद्धपरिकरे जगति जागरूके निश्चिन्ताश्चिन्तामणयः स्वल्पश्रमाः कल्पद्रुमाः स्वर्ग्येककामदुघाः कामदुघाश्च । न जपो न तपो न ध्यानं न दानं न ज्ञानं न श्रवणं न मननं न निदिध्यासो न स्वाध्यायो नेश्वरसमर्चनं च विनामुना व्रतरत्नेन निःश्रेयसाभ्युदयसंपत्संपादने प्रभुतामधिगच्छन्तीति स्फुटं प्रतिभाति । निगमागमेतिहासपुराणकाव्यकथाकथानकेषु च स्फुट एव तस्य व्रतचिन्तामणेः प्रभावः श्रूयते दृश्यते च । एकपत्नीव्रतचिन्तारत्नपरिपालनप्रणयिनामभ्युदयेषु एतदनादरप्रणयिनां चानभ्युदयेषु प्रायो न कोप्यभिज्ञोनभिज्ञो जनस्तथाहि । कन्दमूलफलदलमात्रभोजिनोपि वल्कलैणचर्ममात्रवाससोपि शीर्णजीर्णतृणकुटीपर्णकुटीतरुकोटरांतरमात्रनिवासिनोपि आबाल्यसिद्धहृदयदौर्बल्यात् स्वप्रतिच्छायातोऽपि सभयाशङ्कारङ्का अप्येकपत्नीव्रतचिन्तामणिपरिचर्यया कतिकति न विपश्चितामविपश्चित्वमुपयाताः कतिकति न निष्प्रतिमप्रतापप्रभावानां प्रथमतामाप्ता कतिकति न निखिलाचलाचक्रवर्तिनामपि शक्रतां संप्राप्ताः तथैव पितृपितामहप्रपिता-

महादिकुलपरम्पराप्राप्तपृथिवीप्रभुत्वा अप्यनेकशो विजितदिगीशतयाऽशेषदिग्विजयिनामग्रेसरा अपि वशीकृतसप्तद्वीपा अपि निर्जितचतुर्दशभुवना अपि निगमागमापारपारावारसारपारज्ञप्रज्ञा अपि गर्भेश्वरा अपि न केवलं मानवा देवा दानवा अपि एकपत्नीव्रतचिन्तारत्नोपेक्षया कतिकति न प्रतापभ्रष्टतामगच्छन् कतिकति न नष्टलक्ष्मीकतामनुबभूबुः कतिकति न पामरैरपि नरैरुपहसनीयदशावशाश्च संबभूवुः । एकपत्नीव्रतं हि मूलं कल्याणानामुपायो विजयस्य निदानमुन्नतेरुत्पत्तिक्षेत्रं संपल्लतानां किंबहुना क्षीरनीरधिजठरं च निर्मलयशश्चन्द्रस्य । न लोकत्रयेऽपि दृश्यते दुर्लभं तद्वस्तु यन्नैकपत्नीव्रतप्रभावेणोपलभ्यते । एतद्व्रतप्रभावेणैव वैरिवनदवानलो नलो दुस्तरापत्पारावारमप्युत्तीर्य स्वधर्मपत्न्या सह दमयन्त्या पुनः स्वं राज्यमुपलेभे एतद्व्रतप्रभावेणैव सकललोकलोचनचकोरचक्रवालबालचन्द्रः श्रीरामचन्द्रः प्रबलवैरिबलजलधिमाशोष्य समुन्मूल्य च समूलं रक्षःपतिविषवृक्षं सह महासत्या सीतया पैतृपितामहं पदमाससाद एतद्व्रतप्रभावेणैव अनन्यसामान्यनिजवदान्यताकीर्तितर्जितचन्द्रो हरिश्चन्द्रोप्यापदोऽसंख्याः समुत्तीर्य सह महासत्या तारामत्या पुनर्निजकुलराज्यश्रियमनुबभूवेति केषामविदितम् । एकपत्नीव्रतपरिपालनाय परमेश्वरेण श्रीमहेश्वरेण दक्षयज्ञे योगाग्निदग्धदेहाया महासत्याः सत्याः संधार्यास्थिमालां संलेप्य चिताभस्म द्वादशवर्षावधि तीर्थाटनमप्यङ्गीकृतं रामचन्द्रेण भूविवरविलीनायां भूसुतायां यावज्जीवमखण्डब्रह्मचर्यमङ्गीकृतं पुण्यश्लोकेन नलेन दमयन्तीविरहे पारेपरार्द्ध दुःखानि सोढानि राजकुमारेण कुवलयाश्वेन कपटयोगिनो मुखात्स्वप्राणप्रणाशश्रवणोत्तरक्षण एव प्रणष्टप्राणायां मदालसायां सकलसांसारिकसुखभोगपरित्यागोप्युररीकृतोस्तीति प्रसिद्धमेव । आसृष्टिसमारम्भादद्यावधि श्रूयमाण इतिहासे महाशयशिरोमणीनां पुण्यश्लोकानां वीरधीराग्रसराणां संपूर्णसर्वकामानां राज्ञां महाराजानां राजाधिराजानां च तत्तत्पद-

प्रातिपदं त्वेकपत्नीव्रतमेवास्तीति स्फुटमवगम्यते । तथैव पूर्णेष्वपि तुलितकुबेरकोशेषु कोशेषु प्रबलेऽपि राजनीतिनिपुणे प्रधानमण्डले समुच्छलत्यपि निःसीमशौर्यरससागरे च सैन्ये राजधान्यः शून्यतां राजानो रङ्कतां देशाश्च शून्यारण्यतुल्यतां गता गच्छन्ति वा तेषां तेषां तादृक्स्थितेर्निदानमप्येतद्व्रत परिपालनप्रातिकूल्यमेवास्तीत्यद्वापरमवगन्तव्यम् । किंच वयमेकदा यानि गृहाणि मत्तमातङ्गमण्डलमण्डिताङ्गणानि समास्वाद्यमानसुकविकवितामृतानि नृत्यदनेकाप्सरांसि श्रूयमाणकनकवेत्रपाणिप्रतिहारप्रोच्चारितजयजीवेत्याशीर्वचःकोलाहलानि सानन्दनिःसरत्करप्राप्तसुवर्णपूर्णपूर्णपात्रसंतुष्टविद्वत्कविकुलानि पर्यायप्रविशन्निःसरन्मन्त्रयमात्यसेनापतिसामन्तमण्डलसंकीर्णगोपुराणि सेवार्थमागच्छतां निर्गच्छतां च सामन्तानां हरिकरिनरनौकसहस्रसंकुलाग्रचत्वराणि चालोक्यालोक्यामन्दानन्दनिमग्नमानसा बभूविम तान्येवेदानीं विक्षराहयूथरुद्धाङ्गणानि श्रूयमाणसारमेयशृगालशिवारुतानि नृत्यत्प्रेतांगनाप्रकराणि निःशङ्कसंचरन्नागाङ्गनानकुलकुलानि सानन्दनिःसरन्मुखप्राप्तकुर्कुटकपोतपारावतपोतप्रमुदितबिडालमण्डलानि जीर्णशीर्णप्रायोत्तुङ्गाट्टालिकारूढतृणगणानि समविषमकुड्यभागलीनाहिनिर्मोकोर्णनाभिजालान्यविश्रान्तदीनानाथविधवाविलपितानि चालोक्यालोक्य विषादविषाब्धिमग्नाः करुणया दुःखाश्रुपरम्परां मुञ्चामस्तादृग्विपरीतदशावाप्तिनिदानं च परित्यज्यैकपत्नीव्रतपालनचिन्तारत्नं तनुमदधनमदजनमदयौवनमदगदान्धतया यथेष्टदुराचरणसरण्यनुसरणमेव नान्यत् । एकपत्नीव्रतपरित्यागो हि अराहुबाहुबलभागो महोपरागो यशश्चन्द्रस्य अहेमन्तो हिमपातः सद्गुणसरसीरुहाणां अभीष्मग्रीष्मोदवानलः सन्मतिकल्पलतानां अकल्पान्तकालबीजः प्रलयः श्रियां अकालनिमित्तो मृत्युः सत्यस्य अतिरस्करिणीप्रसारणकारणमावरणमीश्वरध्यानस्य अलुण्टाकलुण्टनं लुण्टनं कुललज्जायाः अतमस्विनीतमोनीहारादिकारणो दिङ्मोहः सन्मार्गस्येति प्रवदन्ति प्राक्तनाः प्रज्ञावन्तः ।

ते खल्वपापस्य सुरवरोपास्यं नंदनवनमतिकण्टकविटपिविकटामटवीमटन्ति स-मुत्सृज्य राजीविनीजीवनराजहंसराजिराजितां स्वर्लोककल्लोलिनीमनेकभेकसंकुलं पल्वलमवगाहन्ते अनादृत्य नयनानन्दप्रदं शरद्विधुं विधुन्तुदमाद्रियन्ते निः-क्षिप्य प्रत्नामूल्यरत्नावलीः काचशकलमाला अभिलषन्ति परित्यज्य पीयूष-रसमुल्बणहालाहलरसमापिबन्ति ये विहाय सर्वव्रतसार्वभौममेतन्महाव्रतं परि-णामविरसमतिचपलं स्वप्नमायानिर्विशेषं च विषयसुखसमूहं मुहुर्मुहुरभिल-षन्ति । अरोगा अपि कतिकति न रोगग्रस्ता निष्प्रतिमतेजसोऽपि कतिकति-न निस्तेजसः परमशुचयोऽपि कतिकति नाशुचिताश्रयाः शारदेन्दुसौन्दर्यवि-स्मारिकीर्तयोऽपि कतिकति न सैंहिकेयसहोदरदुष्कीर्तयः परमसुखसुधासिन्धु-निमग्ना अपि कतिकति न विषमविषादविषोदधिनिमग्ना विवेकिनां प्रथमेऽपि-कतिकति नाविवेकिनामग्रेसरा अप्रतिमधैर्यस्थैर्या अपि कतिकति न गलितधैर्या-उत्तमोत्तमा अपि कतिकति नाधमाधमोपहास्या अभवन् भवन्ति च महामहिममहितैतन्महाव्रतपरिशीलनविश्लेषेणात्र जगति जनाः । विनै-तद्व्रतचिन्तामणिपरिचर्याचरणं किं हृद्या विद्या अधिगम्यन्ते किं नि-स्तुलाः संपदः संपाद्यन्ते किं विमला विजयश्रियः समाश्लिष्यन्ते किं वि-विधाभ्युदया उपार्ज्यन्ते किं सर्वसिद्धिमूलं कुलधर्मः संरक्ष्यते किमुभय लोकहितकरी कुलमर्यादा संपाल्यते किं पतिव्रता धर्मपत्न्यः प्राप्यन्ते किं सत्पुत्र-रत्नमुखदर्शनसुखान्यनुभूयन्ते किमाज्ञानुयायिनाम मनुजानामसीमसौहृदसुखान्यु-पभुज्यन्ते किं सोदरसौहार्दपवित्राणि सन्मित्राणि समवाप्यन्ते किं शरच्चन्द्रचन्द्रिका-सुन्दराःसत्कीर्तयःप्रसार्यंते किमैहिकानि श्रेयांसि लभ्यन्ते किमामुष्मिकानि श्रेयांसि साध्यन्ते किं स्वर्गापवर्गमूलं परमेश्वरप्रसादश्च संपाद्यते मानवैर्न कदाचिदपीति नि-र्विवादम् । स्वप्नेप्यचिन्तितैतद्व्रतत्यागान् स्वप्नेप्यचिन्तितपरद्रव्यान् स्वप्नेप्यचिन्ति तपरद्रोहान् विरलानेव मानवमणीन् जनयंति जनन्यः । त एव पात्रतामुपगच्छन्ती-

श्वरप्रसादस्य तानेव वृणुते विजयलक्ष्म्यः तैरेव स्तम्भैरवष्टब्धं विश्वं विश्वंभरावलयं तेभ्य एवार्पयन्त्यभीष्टानीष्टदेवताः तेभ्य एव प्रवर्तन्ते सद्धर्माः तेषामेव स्नानासङ्गाय स्पृहयति पुण्यतरतरङ्गाघमोद्धारिणी पतितपाविनी गङ्गापि तेष्वेव निवसन्त्यखिला निःश्रेयससिद्धयश्च ये नाजन्मत एव परदारपरद्रव्यपरद्रोहान् मनसा वचसा कर्मणा वा कामयन्ते। किंबहुना परमपवित्रमेकपत्नीव्रतमेतदुपहसति कामदुघाः कल्पद्रमान् चिन्तामणींश्च निजाश्रितवांच्छितवितरणपरिपाटीपाटवेनेति निगमागमेतिहासपुराणप्रसिद्धमेव । ततोऽस्माभिः सर्वैः सवयोभिर्यावज्जीवं जन्मदासु जननीष्विव सोदरासु स्वसृष्विव स्वौरसास्वात्मजास्विव च परस्त्रीषु पवित्रमनोभिः पवित्रवचोभिः पवित्रकायकर्मभिर्भाव्यं स्वधर्मपत्न्यां चात्मनोर्द्ध इव मूर्ते हृदय इव बहिश्चरेषु प्राणेष्विव च निष्प्रतिमनिःसीमनिर्मलप्रेमपरायणान्तःकरणैर्भाव्यमिति मेऽभ्यर्थनेति । कतिकति न वारान् प्रतिसभं सभायां सभ्यानां श्रवणाभरणतां नीतानि मृदुलमञ्जुलपदरत्नभूषणानि भवता भाषणानीति ।

प्रियमित्ररत्न ! एवमनेकशास्त्रेतिहासपुरणप्रख्याताप्रतिमप्रतापमपि महाव्रतमेतदनादृत्य पारेपरार्धं नरपशुपरमाणवः पारदार्यप्रवृद्धप्रीतय इतस्ततः श्वान इव प्रिभ्रमन्तः खेदयन्ति सज्जनचेतांसि । भूमितलभारभूतैश्च प्रायस्तादृशैरेव नरवानरैः सर्वतः संकीर्णानि पुराणि पत्तनानि वीथयो विपणयो राजमार्गाश्चेति । कस्मैकथयाम कस्मै न कथयाम कथनीयं कुत्र स्निह्याम कुत्र न स्निह्याम कैः सहालपाम कैः सह नालपाम वेति न बोधपदवीमवगाहते बुद्धिः । विरलाः किलाजन्मपरिपालितैकपत्नीव्रता मानवचिन्तामणयो युष्मादृशा येषां न पारदार्यप्रसङ्गपङ्कः स्पृशति प्रभाप्रभावम् । आजन्ममातृतुलितपराङ्गनाः पञ्चषा अपि भवादृशा न क्वापि मे लोचनान्याह्लादयन्ति धीरवीरकोटीरमणयो मानवाः । यत्र यत्र निःक्षिप्यते चक्षुस्तत्र तत्र परितो धृष्टतया धावन्तः

कर्णंतुदैरवैरुद्वेजयन्तः सज्जनमनांस्यमङ्गलदर्शना अमङ्गलस्पर्शना अमङ्गलस्मरणा द्विचरणा नररासभाः सभासु राजमार्गेषु चत्वरेषु च केवलं विलोक्यन्ते । ततश्च स्मारंस्मारं युष्मदीयान्याजन्मतः पवित्राणि चरित्राणि भवति मे मनसि विरलाः किल तादृश्यः पातिव्रत्यपवित्रचरित्राः सवित्र्यो यासामुदरं भवादृशानां मानवमाणिक्यानामेव खनिः । पितृपादाश्च ये भवादृशैः सत्पुत्रैः पुत्रवन्तस्ते त्वगण्यपुण्यवन्तो धन्यतमाश्चेति वक्तुं किं शंकार्हम् । मित्राणि च तानि लब्ध-जन्मजीवितसाफल्यानि येषां निर्विकारयौवनेनाऽत्रभवता भवता सह मैत्रीसुखम-नुभवतामानन्दान्निर्यान्ति सौशील्यरसवार्षिणो वासरा इति । किंबहुना एकपत्नी-व्रततीव्राङ्कुशवशीकृतयौवनमदमत्तमातङ्गाय तुभ्यं यद्ददामि तत्स्वल्पमेव । तदतः-परमेतदस्तु ।

प्रेम्णा धृतैकरमणीव्रतमार्यवर्यं
त्वामाजनुः सुपरिपालितसाधुशीलम् ।
श्रीशंकरः करुणया सकलत्रपुत्र-
मित्रार्यसोदरगणं सुखिनं करोतु ॥

इति पाठशालायां विद्यार्थिनां पुरः प्रवक्तुमारब्धमपि मित्रस्मरणदुःखाश्रु-रुद्धकण्ठतया कण्ठाद्बहिरनिर्गतं चैकपत्नीव्रतविषयकभाषणं शत्रुशल्यप्रति-मायाः पुरः पूर्णं प्रेम्णा संपूर्णं विधाय मौनमालम्बमानः सत्यशीलः पूर्ववत्स्व-मित्रशत्रुशल्यमुखादप्राप्तप्रतिवचनः स्मृतिमभिनीय हन्त मणिमयोऽयं मे प्रियवयस्यः कुतोऽस्मात्प्रतिवचनाशा विप्रलब्धोऽस्मि प्रेमावेशविवशाशय-तया । हा कदा तादृशं सुदिनं भविष्यति यत्र मुक्तमणिभावस्याऽस्य मन्मित्रस्य सूक्तिसुधामधुझरीमातृप्ति पास्यामि । इत्युक्त्वा निष्पतदश्रुजलजालं दीर्घमुष्णं च निःश्वस्य परितश्चारयन् चक्षुश्चक्षुर्विषयं चकार लोकचक्षुषो-ऽनस्तमितमस्तमितं चार्धं मण्डलम् ।

नैतदविदितं कस्यापि यत् धीरा वीराश्च नरकुञ्जरा न प्राणान्तप्रदास्वप्यापत्सु मुह्यन्तीति । धीराणां धीरताया वीराणां वीरताया गम्भीराणां गम्भीरताया विदुषां विद्वत्तायाः सज्जनानां सज्जनताया मित्राणां मित्रतायाश्च निकषोपलशिला विपद्वेलैव । विचार्यतां सत्यशीलस्य समुच्छलितः सांप्रतं विपत्पारावारः । यतो गुरुजनानां चन्द्रप्रभाया देवकन्यायाः प्रियंवदायाश्च जीवनाधारः समाश्वासनकर्ता सन्मार्गप्रवर्तकश्च यः स्वयमेक एव सन्मित्रविरहवह्निविह्वलान्तरात्माऽपि सः कथं गुरुजनान् कथं चन्द्रप्रभां कथं देवकन्यां चानुक्षणं समाश्वासयामासेति यन्मन एवावैन्नान्यो यश्च यदि नाभविष्यत्तर्हि चतुर्णां तद्गुरुजनानां चन्द्रप्रभायाश्च प्राणास्तु राजकुमारविपद्दशाश्रवणोत्तरक्षणएव निरगमिष्यन् । यद्यपि यस्य मित्रविरहदुःखानुभवात्प्राणपरित्यागोभीष्टतम एवासीत्तथापि यो गुरुजनानां चन्द्रप्रभायाश्च धैर्यप्रदानाय केवलं त्रपाकरमपि दुःखप्रदमपि भारभूतमिव जीवनमवललम्बे तस्यापीन्द्रनीलमणिमयताप्राप्तिवेला प्राप्तेति समन्तात्सायंसमयशंसीनि चिह्नानि विलोक्य विपत्समयकर्तव्यज्ञानामग्रसरो विद्वद्वरो धैर्यधरप्रवरश्च मनसि विचारयामास । नाहमेतत्स्थानान्मरुद्वेगेनापि सूर्यास्तात्प्राग्बहिर्गन्तुं पारयिष्यामि । तत इन्द्रनीलमणिमयभावो मेऽवश्यंभावीति किं विषादेन किमौदास्येन किमुद्वेगेन वा । तदूरीकृत्य धैर्यं दूरीकृत्य दैन्यचिन्तां मदेकजीविताधारेणातःपरं चन्द्रप्रभादिना जनेन किं विधेयमिति किमपि स्वल्पाक्षरैर्लिखित्वाऽनन्तरं यावत्स्वास्थ्यं शिवदर्शनेन शिवसमर्चनेन शिवप्रार्थनया च समयं क्षयमुपनयामि नान्या चिन्ता ममेदानीमुपयोगिनीति ।

निश्चित्य चैवं लिखित्वैकां पत्रिकां तां चेन्द्रनीलमणिशकलेनाक्रान्तां शिवलिङ्गसन्निधौ निधाय स्नात्वा सरसि पत्रपुटधृतेन वैडूर्यद्रवेणेवाम्भसाऽभिषिञ्च्य भूयोभूयः परमया भक्त्या नीलमणिमयं शिवलिङ्गं दण्डवन्मुहुर्मुहुः

प्रणम्य हे दीनबन्धो दयासिंधो सर्वज्ञ सर्वशक्तिमन् भक्तवत्सल श्रीभवानीवल्लभ ! स्वीयां दीनदयालुतां भक्तवत्सलतामधमाधमोद्धारकतां पतितपावनतामनाथनाथतां च विचार्य दीनाननाथान् पतितप्रतिमान् भवद्भक्तपरमाणून् परया कृपया नोद्धरिष्यसि यदि प्रणतपालकस्तर्हि कोऽपरः समुद्धरिष्यत्यस्मान् । न मन्त्रा न यन्त्राणि न तन्त्राणि न भक्तिं न विरक्तिं वा वयं जानीमहे । केवलं भवच्चरणस्मरणमेव सर्वसिद्धिमूलमिति जानीमहे । ततो भगवतैवास्मन्मनोभिलषितानि पूरणीयानि । न सांप्रतमहमन्यद्याचितुमीहे किंतु मन्मित्रं राजकुमारोयं मणिमयतामनुभवति क्षणात् क्षणार्धाद्वोत्तरमहमपि मणिमयो भविष्यामि । तदनन्तरं मदेकजीवितावलम्बानां मे गुरुजनानां चन्द्रप्रभाया देवकन्यायाः प्रियंवदायाश्च यदा शिखरिशिखराणीव दुःखानि संघीभविष्यन्ति कल्लोलिनीकान्तकल्लोला इव समुच्छलिष्यन्ति शोकावेगाश्चिता इवानन्ताश्चिन्ताः प्रज्वलिष्यन्ति तदा न तत्र तेभ्यो धैर्यं दातुं कोऽपि जनः प्रभविष्यति । ततस्तेभ्यः सर्वेभ्योऽक्षय्यं धैर्यधनं गुरुजनेभ्यो दीर्घमायुष्यं चन्द्रप्रभादेवकन्याप्रियंवदाभ्यो विपद्वेलावश्यककर्तव्यज्ञानं च भगवतैवार्पणीयम् । किंच मणिमयतामुपगते मद्वपुषि यत्र यत्र मे जनुर्भवेत्तत्र तत्रास्यैव राजकुमारस्य मैत्रीपात्रं प्रीतिपात्रं समानसुखदुःखतापात्रं भवेयम् । नैतावदेव किंतु

देयं तदायुषो न्यूनं मदायुस्तत्र जन्मनि ।
एतद्विश्लेषलेशोऽपि यावज्जीवं न येन मे ॥
इत्यर्थयामि मणितामुपगच्छन् महेश्वरम् ।
दीनबन्धुं दयासिंधुं त्वामहं तु मुहुर्मुहुः ॥

इति प्रणामपूर्वमभ्यर्थ्य महेशं समीपमुपेत्य शत्रुशल्यप्रतिमाया गाढमा-

लिङ्ग्य प्रेम्णा तां माऽस्तु निश्चेतनयोः प्रतिमयोरपि वियोग इति तत्समीप एवोपविश्य यावत्

चित्रचरित्रपवित्र प्रियमिलमणेऽद्य धन्योऽहम् ।
साधुभिरशोचनीयस्त्वत्तुल्यदशावशो भविष्यामि ॥
यदि विद्याप्रदानस्य स्तवः सर्वोऽपि वास्तवः ।
तर्ह्यवश्यं भविष्यामः सर्वेऽपि सुखिनो द्रुतम् ॥

इति वदति सत्यशीलस्तावद्भगवान् भास्करः सह सत्यशीलसंज्ञयाऽस्तमगच्छत् । वपुस्तु तस्य शत्रुशल्यस्येव मणिमयमभवत् । सत्यशीलसंज्ञालोपसमकाल एव स्फटिकमणिमयप्रदेशान्तर्गतशिवालयस्था स्फटिकमणिमयी शालभञ्जिकाऽपि मुक्तमणिमयभावा ससंज्ञा संबभूव । सा च तत्र किमप्यपश्यन्ती शिलालेखानुसारेण पश्चिमां दिशमाश्रित्य प्रतस्थे । निशीथे तु गुहान्तर्गतमन्धकारमुल्लङ्घ्य नीलमणिमयप्रदेशमाससाद । तत्र प्रणम्य महेश्वरं तत्समीपपतितां पत्रिकां च गृहीत्वा लोचनगोचरां चकार । विदितपत्रिकाभिप्राया च नीलमणिमयं प्रतिमाद्वयं निपुणं निर्वर्ण्य हन्तैतौ महाभागौ स्थलस्याऽस्य प्रभावेण मणिमयतामुपगतौ तत्रापि राजचिह्नोपलक्षिता प्रतिमा प्राचीनेति ब्राह्मयचिह्नोपलक्षितेयं प्रतिमा त्वद्य सायंसमये एतत्पत्रिकालिखनोत्तरं निःसंज्ञा जातेत्यनुमीयते । अनयोरप्रतिमं मित्रत्वमियं पत्रिका निवेदयति । यद्यपि काऽहं कस्याहं कुत आगताऽहं किंच मे भावीति किमपि न जाने न चैतत्पत्रिकालिखितपुण्यनामधेया अपि काः सन्ति क्व वसन्ति चेत्यभिजाने तथापि तन्नामाक्षराण्येवान्तःकरणं मे निस्तुलालौकिकस्नेहसान्द्रं कुर्वन्ति । एतत्पत्रिकोत्तमलेखलेखकस्य भूलेखलेखर्षभस्यास्य धीरतां गम्भीरतां वीरतां मातृभक्तिं पितृभक्तिं गुरुभक्तिं विद्यादानभक्तिं

मित्रधर्मप्रवीणतां च पत्रिकैवेयं कथयति स्म । रूपसंपत्तिस्तु लोचनाभ्यामेवानुभूयते । धन्यौ तौ मातापितरौ यौ महाभागेनामुना पुत्रवन्तौ धन्यानि तानि मित्राणि यान्यमुना मित्रधर्मधुरन्धरेण मित्रवन्ति धन्या च सा कापि कामिनी यस्या अयं सद्गुणरत्नाकरः प्राणनाथः । भवतु ममाऽपि भवप्रसादादयमेव दयौदार्यधैर्यधुर्यः प्राणनाथ इतीहे । अथवा दूरेऽस्तु तत्प्रथमं तु गम्भीरैतद्वृत्तान्तज्ञानं न चन्द्रप्रभादेवकन्याप्रियंवदासंगमं विना मे भाव्यं ततस्तत्समीप एवोपसरामि यतस्तासामपि रात्रिरेषा कालरात्रिप्रतिमाऽस्य महाभागस्य वियोगेन भविष्यतीति निश्चित्य ततः प्रतस्थे । अथ निशीथप्रभावान्नातिदूर इव श्रूयमाणस्फुटाक्षरं करुणकरुणं बहुजनाक्रन्दनं श्रवणगोचरमभवत्तस्या येन सा पश्चिमगिरिगामिनमध्वानं परित्यज्य तिर्यग्गामिनीमेकपदीमाश्रित्य त्वरिततरैः पदैश्च चचार । नातिदूरमिव गत्वा विभिन्नशिलेन द्वारेण बहिर्निष्क्रम्य परितश्चिक्षेप चक्षुर्युगलं यावत् तावद्ददर्शैकतोगलदविरलाश्रुजलजालाः सहस्रशः कन्या एकतो विविधविलापव्याकुलान् विद्यार्थिन एकतः शून्यचित्तान्मुनीन् एकतः प्रोद्विग्नमानसा मुनिपत्नीः एकतो मूर्च्छितौ राजदम्पती एकतो मूर्च्छितौ प्रधानदम्पती एकतो मूर्च्छितोत्थिता सप्रणयं प्रणामं साश्रुपातं च विद्यार्थिभिः कन्यकाभिश्च प्रार्थ्यमाना आश्वास्यमाना निवार्यमाणा अप्यनादृत्य तत्प्रार्थनासहस्राणि प्रतिक्षणं मरणाधिकदुःसहदुःखानुभवादस्माज्जीवितान् महाभागयोस्तयोः समीपमुपेत्य वरं मरणं मणिमयत्वं वेति निश्चित्य गिरिद्वारमभिप्रस्थिताश्चन्द्रप्रभादेवकन्याप्रियंवदाश्च । देवकन्या तु समीपमुपेत्य तासां प्रियस्वसारो मे भवतीनां मध्ये काऽस्ति चन्द्रप्रभेति पर्यपृच्छत् । तास्तु तस्यां वचनेन तेन किंचिदाश्वस्तहृदया अप्यस्तोकशोकशङ्कुकीलितमनस्कतया न किंचिद्वक्तुं प्राभवन् । विद्यानिधिना च देवि ! स्वागतं देव्या एषास्माकं माता चन्द्रप्रभा कथ्य-

तां कथनीयमित्युक्त्वा तु सा देवकन्या चन्द्रप्रभायाः करे पत्रिकां प्रायच्छत् । चन्द्रप्रभा तु पत्रिकागतान् संदेशान् सर्वेभ्यः शनैः श्रावयामास ।

यत्र धन्या देवकन्या यत्र चन्द्रप्रभा शुभा ।
प्रिया प्रियवंदा यत्र तत्रैषा यातु पत्रिका ॥
मातश्चन्द्रप्रभे मातर्देवकन्ये दयामये ।
प्रिये प्रियंवदे चैषा चरमास्ति ममार्थना ॥
कार्या गुरूणां शुश्रूषा मनोवाक्कायकर्मभिः ।
स्मृत्वा स्मृत्वा मुनिवचो धृत्वा धृत्वा च धीरताम् ॥
यदि प्रियोऽस्मि वो भद्रा यदि पाल्यं वचश्च मे ।
बालाध्ययनशालायां तह्यौंदास्यं न यास्यथ ॥
अत्र युष्मासु कल्याण्यो बहुना लिखितेन किम् ।
निःशृङ्खलासु संपत्सु प्राणान्तासु विपत्स्वपि ॥
धैर्यं धैर्यं पुनर्धैर्यं धार्यमार्या अनुत्तमम् ।
देयं देयं पुनर्देयं विद्यादानमनुक्षणम् ॥
हन्तुमापत्सहस्राणि दातुं संपच्छतान्यपि ।
जागर्त्येकं जगत्यत्र विद्यादानमनुत्तमम् ॥
न स्वमित्रसमावस्थाप्राप्तिरेषा दुनोति माम् ।
प्रत्युतानन्दसंदोहममन्दमभिवर्षति ॥
न तत्तद्विषये चिन्ता कार्या केनाऽपि काप्यहो ।
पुनः शंभुप्रसादेन संगमो भवितैव नः ॥

गलदविरलाश्रुकलाकुललोचनया चन्द्रप्रभया पत्रिकालिखितसंदेशः शनैः शनैः सनिःश्वासं श्रावितः श्रुतश्च तादृगवस्थाभ्यां देवकन्याप्रियंवदाभ्याम् । चरमे

च पद्ये पूर्णे हा हतास्मो मन्दभागिन्य इत्युक्त्वा मूर्च्छया निपेतुः । मुहूर्तात्प्राप्तसंज्ञासु च तासु विद्यानिधिप्रमुखाः सर्वे विद्यार्थिनः प्रणम्य मातर्देवकन्ये मातश्चन्द्रप्रभे मातः प्रियंवदे च नाद्यापि परमोपकारिणो राजकुमारस्य शत्रुशल्यस्य विरहदुःखं विस्मृतं न तन्निमित्तान्यश्रूणि नयनेभ्यः शुष्काणि नच तन्निमित्तः शोकसंताप उपशान्तो यावत्तावत्तु राजकुमारस्य मूर्तमिव हृदयं द्वितीय इवात्मा बहिश्चर इव प्राणोऽस्मद्गुरुवर्यः सत्यशीलोऽपि स्वमित्रदशामाससाद । नेयं साधारणा विपद्वेला । अस्यां च वेलायामतिधीरैरेव धैर्यं धार्यते न साधारणैः । यद्यपि हृदयभेदीन्येतानि वृत्तान्तानि धीराणां वीराणां गम्भीराणामपि धीरत्ववीरत्वगम्भीरत्वविस्मारकाण्येव सन्ति तथापि विचार्यैं स्वल्वस्माभिरेवमवधीर्य धीरत्वं विसृज्य वीरत्वं निर्भर्त्स्य च गम्भीरत्वं करुणकरुणै रोदनैर्निर्दयतरमुरःशिरस्ताडनैर्दिर्घदीर्घैर्विलापैः प्राणपरित्यागेनाप्याचरितेन वा किं फलं न किंचिदिति । न चैतस्यां विपत्तावेतत्किमपि कर्तुमुचितम् । यदस्या विपदोन्ते जागर्त्यस्माकं काप्युत्तमा प्रत्याशा ततोऽस्मद्गुरुवर्यलिखितानुसारेण धैर्यमालम्ब्य विद्यावितरणप्रवणान्तःकरणाभिर्भाव्यमत्रभवतीभिर्भवतीभिरिति नः प्रतिभाति । किमधिकं सर्वज्ञानां युष्माकमग्रे स्वल्पज्ञा वयं ब्रूम इत्युक्त्वा तूष्णीमासन् । ततश्च संप्राप्तसर्वसद्विद्यावैशारद्याः कुमार्यः सप्रणयं सप्रणामं सार्जवं साञ्जलिबन्धं च प्रोचुः । अयि मान्या मातरः ! सकलसलिलाशयेश्वरस्याग्रे कलशसलिलमिव पवमानस्याग्रे व्यजनान्दोलनजन्यपवन इव जगत्प्रदीपस्य दिनकरदेवस्याग्रे दीप इव चन्द्रस्याग्रे च चन्दनलव इव युष्माकमग्रे स्वल्पज्ञानां स्वल्पप्रज्ञानां बालिकानामस्माकं वाक्चापलमेतदस्ति । भवादृशीनां पुरः प्रवक्तुं कास्माकं बुद्धिः का शक्तिः कोऽधिकारस्तथापि यर्हीदानीमसह्यापत्पयोधौ यूयं निमग्नाः स्थस्तर्हि युष्मदुपदिष्टमेव

युष्मभ्यं स्मारयितुमुत्कण्ठते स्वान्तानि नस्तदमुमेकमविवेकमार्या मातरः क्षमिष्यन्त्यत्रभवत्यो भवत्य इत्याशास्महे ।

शतश उपदिष्टं भगवतीभिः खल्वप्रतिक्रियास्वापत्सु धैर्यमेवोत्तमतमं धनम् । प्राक्तनकर्मविपाकेन यासां यासां विपदामनुभवो विधात्राऽस्मल्ललाटे लिखितस्तास्ता विपदः स्वपक्षसाहाय्यलक्षेणापि प्रतिक्रियाकोट्यापि प्रयत्नपरम्परापरार्धेनाऽपि नापसार्यन्ते । कुलिशकठिनहृदया हि विपत्तिस्ततो भीरूणां करुणाजनकैर्विलापालापलक्षैरपि न सा सकरुणा भवति स्फारस्फाराभिरश्रुधाराभिरपि न सार्द्रहृदया भवति शिरउरस्ताडनैरपि न सा विमुखी भवति । बहुविधा हि विपदो भवेऽस्मिन्प्रादुर्भवन्ति । यदा यदा यादृशी यादृशी विपदापतेत्तदा तदा तया तया सहाभियोद्धुमेव प्रवृद्धपरिकरैर्भाव्यं भव्यैर्धीरैर्वीरैश्च । निष्कपटमनोवाक्कायकर्मभिः परमेश्वरमाश्रित्य सत्सङ्गबलेन शास्त्रसङ्गबलेन च धैर्यस्थैर्यवद्भिर्विद्वद्भिरवधीर्या अनुपदं विपदः । किंच यद्यदीश्वरो विदधाति तत्तल्लोकदृष्ट्या तु शुभमशुभं वा भवतु परं परिणामे तु शुभमेव भवतीति लोकोक्त्यनुसारेणाप्रतिक्रियास्वप्यसह्यास्वपारास्वप्यापत्सु धैर्यमेव धार्यं न व्याकुलस्वान्तता स्वीकार्या कार्याकार्यकुशलैः सुकुलीनजन्मभिर्मनुजन्मभिरिति । यथैवोपदिश्यतेऽनुदिनं तथैवेदानीं वर्तितव्यं भवतीभिः । यदि यूयमेव विमुक्तधैर्या भविष्यथ तर्ह्यस्माकं का दशा भविष्यति । प्रायो महाशया नात्मार्थं जीवन्ति किंतु परार्थमेव । तथैव भगवतीभिः केवलं बालाध्ययनशालागतबालानां श्रेयोर्थं मूर्च्छया पतितानां चैषां तीर्थरूपाणां परिचर्यार्थं च शत्रुशीलसत्यशीलयोर्विश्लेषेण मरणाधिकान्यपि दुःखान्यङ्गीकृत्य न जीवितेऽनादरः कर्तव्यः । मुनिवरवचस आधारेणार्यस्य सत्यशीलस्य पत्रिकानुसारेणैव वर्तिष्यथेति नः प्रार्थना । इति साश्रुपातमुक्त्वा मौनमालम्बमानासु तासु चन्द्रप्रभा अयि पुत्रा अयि पुत्र्यश्च युक्तमुक्तं भवद्भिर्भवती-

भिश्च । विविधविपत्प्रहारव्याकुलतया किंकर्तव्यताकान्दिशिकतामुपगताय जनाय सर्वैरपि यथास्वमतिवैभवं धैर्यमर्पणीयमेवेति सर्वेषां धर्म एव । ततो नात्र कश्चिदविवेको वः । किंच युष्मदुक्त्यनुसारेण तीर्थरूपाणामेषामस्माभिः परित्यक्तेषु प्राणेषु का दशा भविष्यतीति चिन्तैव सांप्रतं मरणाधिकदुःखं त्रपाकरं भारभूतं जीवितं धारयितुं कारणतां गच्छति । सफलयतु परमकृपालुः परमेश्वरो युष्मदाशीर्वचांसि येन जीवितमिदं नस्त्रपाकरं न स्यादित्युक्त्वा सह देवकन्याप्रियंवदाभ्यां मूर्च्छापनोदनिपुणैरुपचारैरपास्तमूर्च्छान् गुरुजनान् विधाय स्वस्थेषु तेषु देवि काऽसि कस्याऽसि कुतोऽत्र निशीथे भवत्या आगमनं कथमुपलब्धेयं पत्रिका चेति श्रोतुमातुरतराणि सर्वेषां नश्चेतांसि तत्कथनानुग्रहं करिष्यसीत्याशासे इति नवीनदेवकन्यामपृच्छत् । चन्द्रप्रभयैवं पृष्टा च सा स्फटिकमणिमयप्रदेशादिन्द्रनीलमणिमयप्रदेशागमनमिन्द्रनीलमणिमयशिवलिङ्गदर्शनमिन्द्रनीलमणिमयप्रतिमाद्वयदर्शनं चारभ्य यावदाश्रमागमनं सर्वं यथानुभूतं संवर्ण्य प्रियस्वसारो मे दिष्टया यत्रैवासीद्गन्तुमिच्छा तत्रैवाहमागतेति । किंच तत्र पत्रिकाक्षरार्थावगमानन्तरमेव प्रियंवदाप्राणनाथस्य स्वीकृतं पदपद्मदास्यं मया मामपि ततो युष्माकं समानसुखदुःखभागभोगिनीं मंस्यथेत्यब्रवीत् । नवीनदेवकन्यावर्णितवृत्तान्तश्रवणेन विस्मितचित्ताः सर्वास्तां क्रमशः परिरभ्य सत्कृत्य च तेनैव प्रसङ्गेण निद्रादरिद्राः क्षपाशेषं क्षपयामासुः । क्रमशः शास्त्रसङ्गेन वृद्धगुरुजनानां भक्त्या विचारशक्त्या च निजया चन्द्रप्रभया प्रियजनवियोगवन्हिमुह्यन् स्वीयं मनः प्रसह्य स्वास्थ्यमुपनीतं प्रियंवदादेवकन्याश्च सा समाश्वासनशतैः स्वस्थचित्ताश्चकार । हृदयभेदकानि विस्मयावहानि च वृत्तान्तानि यानि यानि भूतानि भविष्यन्ति च तेषु तेष्वणुमात्रमप्यन्यथाकर्तुं न किं[illegible]दपि बलमस्ति । यद्यस्ति किमपि बलमिति मन्यामहे तर्हि विद्यादानमेव व[illegible]नान्यत् । पक्षेण मासेन वा मासषट्केन वर्षेण वा

पञ्चभिर्वर्षैर्दशभिर्वा यदि परेश्वरप्रसादादस्माकं श्रेयो भविता तर्हि विद्यादानेनैव भविता नान्येनेति निश्चयवत्यश्चन्द्रप्रभाद्या महासत्यः पुनरपि परया प्रीत्या प्रवृद्धया श्रद्धया मुनिकुमारीभ्यो विद्यारत्नान्यर्पयामासुर्मुनिबालकेभ्यश्च विद्याप्रदानाय विद्यानिधिप्रमुखान् सत्यशीलशिष्यान्प्रायुङ्क्त । यथा प्रथमागता देवकन्या चन्द्रप्रभासमीप एवावसत् परिणतौ च चन्द्रप्रभासाम्यमिच्छतिस्म तथैव द्वितीयदेवकन्या प्रियंवदासमीप एवावसत् परिणामे प्रियवदासाम्यं चेच्छतिस्म । एवं व्यतीतेषु केषु केषुचिद्द्वारसरेषु संप्राप्तसर्वविद्यावैशारद्याऽतिहृद्या निरवद्याः कुमारिका विलोक्य परमपरितोषपूर्णान्तःकरणा चन्द्रप्रभा सप्रमोदं प्राह—

अयि विचित्रचरित्रपवित्राशयाः प्रियपुत्र्यो मे ! निपीतनिःशेषशास्त्रसारसुधारसानां विदितहिताहितहेयोपादेयानां करामलकीकृताखिलकाव्यकोशकथाकथानकरहस्यानां सकलकलाकलापप्रवीणानां च भवतीनां नाल्पमप्युपदेष्टव्यमस्ति तथापि युष्माकमव्यलीका भक्तिरेव मुखरीकरोत्येवं वक्तुं मां ततश्च यदुच्यतेऽनया युष्मत्प्रियहितैषिण्या तत्सावधानाः श्रोष्यथेत्याशासे ।

वत्साः! प्राणान्तास्वप्यापत्सु न कदाचिदसत्यं वक्तव्यम् । यतोऽसत्यवादिता हि अकालमृतिराप्तताया असाध्यक्षयोत्पत्तिरार्यताया उच्चाटनविद्या विवेकिताया अभिचारक्रिया साधुताया उत्पत्तिस्थानमविश्वसनीयतायाः क्रीडास्थली नीचतयाः पात्रं कुपात्रतयाः साधनमसाधुताया बीजं च सर्वाविनयानां सर्वानर्थानां सर्वपापानां सर्वदुःखानामिति प्रति निगमागमेतिहासमधीतमेव वत्साभिः । न दुःसङ्गो विधेयः । दुःसङ्गो हि विद्वांसमपि विनीतमपि विवेकिनमपि क्षणात्करोति सकलाकीर्तिपात्रम् । नार्जवं स्वप्नेऽपि परिवर्जनीयम् । आर्जवं हि अदूरगमनं तीर्थम् । न किलाखिलावनिमण्डलेऽपि तादृशं तीर्थं पश्यामि यत्क्षणमपि समारोहेदार्जवतुलाम् । भगवता

वेदव्यासेनापि

**सर्वतीर्थेषु वा स्नानं सर्वभूतेषु चार्जवम् ।**
**उभयं तत्समं ख्यातमार्जवं वा विशिष्यते ॥**

इत्युक्तवता कीदृश आर्जवप्रभावः प्रदर्शित इति नाविदितं वः । पुत्र्यः! क्रोध एव सक्रोधाभिर्मत्सर एव समत्सराभिर्मदमर्दन एव समदाभिश्च भाव्यं भवतीभिः । परिचरत परमेश्वरधिया प्राणनाथम् । स्त्रीणां हि प्राणेश्वर एव परमेश्वर इत्यधीतपूर्वमेव भवतीभिः । श्रयत तीर्थधिया स्वश्वश्रूश्वशुरौ । तयोरर्चनवन्दनमाज्ञानुवर्तनं च चिन्तामणितामुपगच्छति । कतिकति न श्रुता न श्रूयन्ते नानुभूता नानुभूयन्ते वा भवतीभिः श्वश्रूश्वशुरसेवापरायणान्तःकरणतया कल्याणभाजनतामुपगता भामिन्यः । अनुदिनमभिवन्दनीया ननन्दरः । पुत्रधिया पालनीया देवराः । किंबहुना पाणिग्रहणानन्तरं सर्वमपि श्वशुरकुलासंबन्धिनं जनं सारल्येन सौशिल्येन दाक्षिण्येन विशुद्धमनोवाक्कायकर्मभिश्च परिचरेथाः । यतस्तुष्टास्तु ते प्राणनाथप्रीतिकल्पलतायां पीयूषपयोधरतां रुष्टाः पुनः करालदवानलतामालम्बन्ते इति वह्वीभिरनुभूतं कुलकामिनीभिः । अयि धर्मपुत्र्यो मे! नासतीभिः क्षणमात्रमपि संगमो विधेयः । असतीसंगमो हि आचार्योऽनार्यचर्याचातुर्याणाम् । यतः सुशीला अपि सरला अपि स्वप्नेऽप्यचिन्तितपापा अपि कुलीना अपि सद्गुणलीना अपि दोषलवहीना अपि नार्यः क्षणार्धमात्रपरिचितेनाप्यसतीसंगतेनानेकाः समाचक्रमुश्चक्रवर्तिपदं पुंश्चलीचक्रस्येति प्रतिपुराणेतिहासं स्फुटमेव श्रुतं वत्साभिः । कुलस्त्रीणां हि प्राणेश एव दैवतबुद्धिः श्वशुर एव तीर्थबुद्धिः प्राणेशार्यसोदरेष्वेव पितृबुद्धिस्तत्पत्नीष्वेव मातृबुद्धिर्ननान्दृष्वेव स्वसृबुद्धिर्देवरेष्वेव सोदरबुद्धिः सतीष्वेव प्रियसखीबुद्धिः सौशील्य एव जीवनबुद्धिः पातिव्रत्य एव प्राणबुद्धिः सद्गुणेष्वेवाभरणबुद्धिः

पतिपदपद्मपरिचर्यायामेव च सर्वस्वबुद्धिर्भवतीति केषामविदितम् । सिन्धुराजसद्वंशसंभवाया अपि सकलकलाकलापकुशलाया अपि सुरलोकललनासंवर्ण्यलावण्याया अप्यम्बाया उभयलोकभ्रष्टता हि परमेश्वरप्रदत्तात्मप्राणनाथपराङ्मुखान्तःकरणावृत्तिविषवल्लीफलमिति मन्तव्यम् । दूरेऽस्त्वपतिव्रतापातकप्राबल्यवार्ता । प्रथमं तु पश्यतापतिव्रतापक्षकारेष्वपि पातकप्राबल्यम् । आहर्तानेकयज्ञानां संहर्ता सर्वभूभुजामुद्धर्ताऽखिलविश्वंभरावलयविपदामुपदेष्टा शस्त्रास्त्रशास्त्रस्य प्रचण्डदोर्दण्डमण्डलोद्यतपरश्वधधाराविदारिताखिललोकलोकपालविजयिराजन्यनिकरशिरोमालासमर्पणसंतोषितकालभैरवः कार्तिकेयविजयप्रेक्षणप्रसन्नसांबसदाशिवप्रसाददत्तपरशुः प्रथमः श्रीखण्डपरशोरन्तेवासिनां परमेश्वरः परशुरामोऽपि निजान्तेवासिनो गङ्गापुत्रात्पराजयापयशःपात्रतामनुबभूव यत्तन्मूलमपतिव्रताया अम्बायाः पक्षपातस्वीकार एव नान्यत् । अत्र चिन्त्यं चेतसा सचेतस्कैर्यर्हि निःशेषवीरविजयी भगवान् भार्गवोऽपि पांसुलापक्षपातात्पराभवभाजनमभवत्तर्हि का कथान्येषां साधारणतराणां नराणां पराभवसंभवे । एवं पांसुलापक्षकारिणामपि दुर्लभो भवति विजयस्तर्हि तासां तु कुत एव विजयाभ्युदयप्रत्याशा । दुष्कृतशतनिवासवसतीनामसतीनां नाभ्युदयो न विजयो न कल्याणं न सत्कीर्तिर्न प्रतापो न प्रतिभा नैहिकं सुखं नामुष्मिकं वा सुखं कदाचिदपि संभवति । न पितरो न मातरो न भ्रातरो न भ्रातृपत्न्यो न पितृव्या न पितृव्यपत्न्यो न मातुला न मातुलपत्न्यो न मातृस्वसारो न पितृस्वसारो नात्मस्वसारो न सुहृदो न बन्धवो न बान्धवा न स्नेहिनो न केऽपि ज्ञातिसंबन्धिनो न केऽपि जातिसंबन्धिनो वाप्यपतिव्रताभ्यो मानमर्पयन्ति । नैतावदेव निबिडतरसंबन्धसंबन्धनिबद्धा अपि स्नेहसान्द्रहृदया अपि ते सर्वे सतिरस्कारया दृशा पश्यन्ति सतिरस्कारया गिरा निन्दन्ति सतिरस्कारं शपन्ति चापतिव्रताः ये गुरुजनाः स्वसन्तानानां दीर्घमायुष्यं

वाञ्छन्ति त एव गुरुजना अपतिव्रतानामल्पायुष्कतामिच्छन्ति ये गुरुजनाः स्वसन्ततिं विलोक्याह्लादसुधासिन्धुमग्ना भवन्ति त एव गुरुजना अपतिव्रता विलोक्य विषादविषोदधिमग्ना भवन्ति ये गुरुजनाः स्वसन्तानेभ्यः शुभाशीःपरम्पराः प्रयच्छन्ति त एव गुरुजना अपतिव्रताभ्यो दुःशापपरम्पराः प्रयच्छन्ति । किमिदमल्पं विषादस्थानं किमिदमल्पमपमानस्थानं किमिदमल्पं धिक्कारस्थानं च । विचार्यतां कतिकति न दुःखानि कतिकति न पापानि कति कति न संतापाश्चापतिव्रतात्वे निवसन्तीति । यदि विधुविधुंतुदयोर्यदि तेजस्तिमिरयोर्यदि नाकनरकयोर्यदि पीयूषहालाहलयोश्च तुलना स्यात् तर्हि पतिव्रताऽपतिव्रतयोस्तुलना स्यात् । एकस्यामेव जातावेकस्यामेव ज्ञातावेकस्मिन्नेव कुले च संभवन्ति पतिव्रता अपतिव्रताश्च । तत्र पतिव्रताः पवित्रपातिव्रत्यप्रभावेण देवानामप्यभिवन्दनीया भवन्ति अपतिव्रता अपवित्रापातिव्रत्यगलत्कुष्ठप्रभावेणातिपामराणामपि नराणां निन्दनीया भवन्ति । एवं श्रुतिस्मृतिपुराणेतिहासेषु प्रतिपदं प्रबोधयत्स्वपि का खलु मन्दा मन्दमतिर्मन्दभामिनी च पातिव्रत्यचिन्तारत्नं परित्यज्य मोहादपातिव्रत्यगलत्कुष्ठं स्वीकुर्यात् । सच्छास्त्रसङ्गमूलं सतीसङ्गमूलं च पतिव्रतात्वम् । असच्छास्त्रसङ्गमूलमसतीसङ्गमूलं चापतिव्रतात्वम् । अतो बाल्यादारभ्यैव सच्छास्त्रश्रवणं सच्छास्त्रमननं सच्छास्त्राध्ययनं च विधेयम् । निरन्तरं सतीभिः सहैव वासो विधेयो नासतीभिः सतीनामेव सेवा विधेया नासतीनां सतीनामेव सङ्गतिर्विधेया नासतीनां सतीनामेवोपदेशाः श्रोतव्या नासतीनां सतीनामेव कथाः कार्या नासतीनां सतीनामेव गुणा गेया नासतीनां सतीनामेव च चरितान्यनुसर्तव्यानि नासतीनाम् । कुलीनकामिनीनां परमं ज्ञेयं परमं ध्येयं परमं विधेयं चैतदेवास्ति यत्सच्छास्त्रपरिशीलनेन पतिव्रतापरिचयपरिशीलनेन च पातिव्रत्यरत्नमनर्घ्यमुपार्जनीयमिति । न प्राणान्तास्वप्यापत्सु पातिव्रत्यचिन्तामणिः

परिहर्तव्यः । पातिव्रत्यपरिपालनादागता हानयोऽपि लाभरूपाः पराजया अपि जयरूपा दुःखान्यपि सुखरूपाणि मन्तव्यानि । पातिव्रत्यपरित्यागादागता लाभा हानय एव जयाः पराजया एव सुखानि दुःखान्येव मन्तव्यानि । पातिव्रत्यपरित्यागे लाभजयसुखानां प्राप्तिरेव न संभवति तथापि यदि कदाचित् मोहादज्ञानादविचाराद्वा तथा प्रतिभासेत तर्हि ते लाभा हानिपरिणामा एव ते जयाः पराजयावसाना एव तानि सुखानि दुःखोदर्काण्येवेति निःशङ्कमवगन्तव्यम् । न जात्यायत्तं न ज्ञात्यायत्तं न कुलायत्तं नावस्थायत्तं वा पातिव्रत्यस्योत्तमत्वम् । किंतु जातिज्ञातिकुलावस्थानामुत्तमत्वं पातिव्रत्यायत्तम् । अर्थात् अमुकस्यामेव जातावमुकस्यामेव ज्ञातावमुकस्मिन्नेव कुलेऽमुकस्यामेवावस्थायां वोत्तमं पातिव्रत्यं भवतीति न नियमः । किंतु यस्यां जातौ यस्यां ज्ञातौ यस्मिन्कुले यस्यामवस्थायां वा पातिव्रत्यं प्रादुर्भवति सैव जातिरुत्तमा सैव ज्ञातिरुत्तमा तदेव कुलमुत्तमं सैव चावस्थोत्तमेति गण्यतेऽगण्यगुणैकशरणतया भूतलभूषणायमानमनोभिः सुमनोभिः । यत उत्तमोत्तमजातिज्ञातिकुलेषु यद्यपतिव्रताः प्रादुर्भवेयुश्चेत्तर्हि निष्फलमेव जातिज्ञातिकुलानामुत्तमत्वम् । यदि च दैवयोगाद्दशायोगात्कर्मयोगाद्वा नीचनीचेष्वपि जातिज्ञातिकुलेषु यद्येकापि प्रादुर्भवेत्पतिव्रता तर्हि नीचनीचान्यप्यात्मनोजातिज्ञातिकुलान्युत्तमोत्तमतां नयतीति केषामविदितम् । यर्हि सर्वस्या अपि जातेः सर्वस्या अपि ज्ञातेः सर्वस्यापि कुलस्य चोत्तमत्वाधमत्वगणनाया आधारस्तत्तज्जातिज्ञातिकुलभुवां सुभ्रुवां पातिव्रत्यापातिव्रत्याधीनएव तर्हि सर्वाभिः सत्कुलसंभवाभिः पुत्रीभिस्तथा वर्तितव्यं तथा सद्गुणाः संपाद्यास्तथा सद्विचारा विधेयस्तथा सदाचाराः पाल्यास्तथा सद्व्यवहारा विधेयास्तथा शीलं संरक्षणीयं तथा पातिव्रत्यं च पाल्यं यथात्मजातिज्ञातिकुलान्युत्तमोत्तमत्वगणनागणीयतामुपेयादात्मन-

श्चैहिकामुष्मिकश्रेयःसिद्धिः संभवेत् । एतावतैव परिसमाप्तं जन्मजीवितसाफल्यं सुकुलकामिनीनाम् । तासां तु धिक् बुद्धिं धिक् दुर्विचारान् धिक् कृत्यानि धिक् जन्मानि धिक् जीवितानि च या मूर्खतया मोहेनाज्ञानेनाविवेकेनाविमृश्यकारितया चाखिलामपि स्वां जातिं ज्ञातिं कुलं कलङ्कयन्त्युत्तमोत्तमत्वादाकृष्याधमाधमत्वं च प्रापयन्ति एवमेकस्या एव कुपुत्र्याः कुत्सिताचरितैर्निखिलमपि कुलं लज्जावनम्रवदनं भवत्येकस्या एव च सुपुत्र्याः सदाचरितैः सकलमपि कुलं परमाह्लादसंदोहादुन्नम्रवदनं भवतीति श्रुतं सर्वं श्रोतव्यम् । तत्प्रियपुत्र्यो मे ! मदीयप्रियशिष्याभिर्मत्सहवासवर्धिताभिर्मत्तोधीताध्येतव्याभिर्मत्तो ज्ञातज्ञातव्याभिश्च भवतीभिः सर्वाभिः सर्वथा न प्रमदितव्यं स्वधर्मात् संपाद्याः सतीगुणाः समुपार्ज्यं पातिव्रत्यं परित्याज्यमसतीसङ्गतं संसेव्यानि चाहिंसासत्यास्तेयदयौदार्यसौहार्दसौजन्यसारल्यसौशील्यानि मनसा वचसा कर्मणा च परमेश्वर इव प्राणेश्वरः सेव्यः संसेव्यौ च तीर्थनिर्विशेषधिया श्वश्रूश्वशुरौ प्रतिदिनं प्रतिप्रहरं प्रतिक्षणं चात्मप्राणप्रियस्य प्रियाणि हितानि चिन्तनीयानि । किंबहुना स्त्रीणां न दानं न जपो न तीर्थाटनं वा चतुर्वर्गफलप्राप्तिसाधनं किंतु पातिव्रत्यं पातिव्रत्यं पातिव्रत्यमेवेत्युक्त्वा निषसाद देवी चन्द्रप्रभा । अथ सदुपदेशामृतपानपरितुष्टस्वान्ततया चन्द्रप्रभोपकारस्मरणपूर्वं तदनुमोदनाय यथास्वशक्ति किमपि वक्तुमुत्कण्ठतेस्म यावत्कुमार्यस्तावच्चन्द्रप्रभासिंहासनसमीपस्थो बिडालो मनुष्यवाचा प्रोद्गतरोमाञ्चः सहर्षमिदमुवाच ।

**अयि चन्द्रप्रभे चन्द्रप्रभेर्ष्यालुशुचिस्मिते ।**
**सौशील्यकीर्तिचन्द्रस्ते जीयादाचन्द्रतारकम् ॥**

निशम्यैतामतिरम्यां वाचं साश्चर्यानन्दमग्नासु चन्द्रप्रभाप्रियंवदादेवकन्यामुनिकन्यासु स मार्जार इन्द्रजालमयइवाकस्मात्सद्यो भव्यदिव्याकृतिसुन्दरो

राजकुमारः संबभूव । विलोक्य लोकलोचनचकोरचन्द्रायमानमुखचन्द्रं तं संभ्रमाश्चर्यभयचकितलोचनासु तासु स राजकुमारः प्रणामप्रबद्धाञ्जलिरयि मातश्चन्द्रप्रभे मातः प्रियंवदे मातरौ देवकन्ये मातरो मुनिपत्न्यः पुत्र्यो मुनिपुत्र्यश्च ! माश्चर्यमाश्रयत मा संभ्रमं भजत मा च किमपि भयमुपगच्छत । यदयमपि जनो भवदीयदुःखसुखसमभागभोगभाजनं भवद्वर्गीय एवास्तीत्यब्रवीत् अमृतप्रतिमां नृपतिकुमारवाचमाचम्य संप्राप्तधैर्या चन्द्रप्रभा भद्रमुख ! भव्या दिव्या चेयमाकृतिरेव करोति निर्भयान्यस्मदन्तःकरणानि तथापि पूर्वक्षणे वत्सस्य काऽपि विचित्रैव स्थितिरभवद्विद्यमानक्षणे च कापि विपरीतैव स्थितिर्दरीदृश्यते । दृष्ट्वाचैतत्कथमाश्चर्यं न स्यात् कथं संभ्रमो न स्यात् कथं च हृदयं सभयं न स्यात् तत् वृद्धानस्मद्गुरुजनान् समाहूय तत्समक्षं सर्वं भवद्वृत्तान्तं श्रोष्यामीत्यब्रवीत् । ततश्च राजकुमारोऽपि मातश्चन्द्रप्रभे ! युक्तमुक्तं भगवत्या । वृद्धाः खल्वक्षयज्ञाननिधयो यदीयज्ञानसहस्रांशोऽपि न बालैर्न युवभिर्वा कदाचिदप्युपलभ्यते । न धर्मज्ञानं न कर्मज्ञानं न राजरीतिज्ञानं न कुलरीतिज्ञानं न हिताहितज्ञानं न सत्यासत्यज्ञानं न कृत्याकृत्यज्ञानं च विना वृद्धान् लब्धुं शक्यते । वृद्धानामन्धप्रायापि दृष्टिर्यत् पश्यति न तद्यूनां देदीप्यन्त्यपि दृष्टिः पश्यति वृद्धानां प्रोषितश्रोत्रावपि कर्णौ यच्छृणुतो न तद्यूनां सेन्द्रियदैवतावपि कर्णौ शृणुतः वृद्धानामव्यक्तयापि वाचा यदुच्यते न तद्यूनां स्फुटवर्णविभागयाऽपि वाचा वक्तुं शक्यते वृद्धानां जीर्णयाऽपि स्मृतिशक्त्या यत्स्मर्यते न तद्यूनां नवीनयापि स्मृतिशक्त्या स्मर्तुं शक्यते वलीकलिताङ्गैः पलितकेशैरसक्तसर्वेन्द्रियैर्जराजीर्णतया प्राप्तवैरूप्यैरपि वृद्धै राजसभासु विद्वत्सभासु ज्ञातिसमाजेषु च या मान्यता यद्गौरवं यश्च सत्कारः संप्राप्यते सा मान्यता तद्गौरवं स सत्कारश्च स्वस्थशरीरैरलिकुन्तलैः सक्तसर्वेन्द्रियैरभिनवयौवनतया-

ऽप्रतिरूपसंपद्भिरपि किशोरैः किं कदाचिदपि संप्राप्यते नैवेति निर्विवादम् । ते खल्वगण्यपुण्यवन्तो निःसीमसद्भाग्यभाजो निरवधिसुखसिन्धवश्च येषां गृहान्प्रकाशयन्ति परमपवित्रदर्शना वृद्धगुरुजनमणयस्तत्सुखं समाहूयन्तां वृद्धा गुरुजना येषां पूर्वावस्थया कृतवन्दनोऽपीदानीं नवीनयानयावस्थया कृतपादाभिवन्दनः कृतकृत्यो भविष्यामीत्यवोचत् । ततश्च चन्द्रप्रभाप्रेषितामिर्मुनिपुत्रीभिरालम्बितौ वृद्धौ राजदम्पती प्रधानदम्पती च पर्णकुटीतः प्राप्तौ सरस्वतीभवनम् । अभ्युत्थाय सर्वैः कृताभिवन्दनाः सदासनोपविष्टाश्च ते गुरुजना अदृष्टपूर्वाय पादपतिताय राजकुमाराय समर्प्याशिषं को भवान् कुत आगत इति प्रष्टुं यावद्वाञ्छन्ति तावच्चन्द्रप्रभाप्रेरणया प्रियंवदा समुत्थाय मुकुलितकरकमला व्यजिज्ञपत् । आर्या नाविदितं प्रायो युष्माकं यत् सकलसद्गुणरत्नरत्नाकरे राजकुमारे शत्रुशल्ये दैवान्नीलमणिमयतामुपगते तद्वियोगविह्वलतया चिताप्रवेशोद्यताय तत्प्रियमित्राय देवकन्यायै चास्यै केनापि दयालुना मुनिवर्येण न प्राणपरित्यागो विधेयो भवद्भ्यां भूयोऽपि भविष्यति भवतोर्वल्लभजनसमागम इत्याशास्य ज्ञास्यसि क्रमेणास्यापि सर्वं वृत्तमित्युक्त्वा च चित्तचमत्कृतिकराकारो मार्जारोर्पित आसीद्योऽद्य समयावधि चन्द्रप्रभया पुत्रनिर्विशेषं पालितस्तत्समीप एव न्यवसदिति । इदानीं स मार्जारश्चन्द्रप्रभारचितपतिव्रताधर्मविषयकभाषणपरिसमाप्तौ सद्य एव मनुष्यगिरा

अयि चन्द्रप्रभे चन्द्रप्रभेर्ष्यालुशुचिस्मिते ।
सौशील्यकीर्तिचन्द्रस्ते जीयादाचन्द्रतारकम् ॥

इति वदन्निन्द्रजालमय इवायं राजकुमारः संबभूव । तदयं पूर्वं कोभूत् कथमस्य मार्जारता जाता कथमस्य मुनिराजकरकमलगमनं कथं चेदानीमकस्मान्मार्जारतामुक्तिपूर्वा राजकुमारताप्राप्तिरिति युष्माकं समक्षमेव तन्मुखाच्छ्रो-

तव्यमिति विचार्यात्रागमनाय प्रार्थिताश्चन्द्रप्रभया यूयमतःपरं युष्मदाज्ञा प्रमाणमिति विरतायां प्रियंवदयां वत्से! युक्त एव वत्सायाश्चन्द्रप्रभाया विचारः सुखं पृच्छतु चन्द्रप्रभा भद्रमुखमेनं तद्वृत्तान्तं वयमपि तच्छ्रवणाय सकुतूहला एवेत्युक्ते चन्द्रकीर्तिना चन्द्रप्रभा भद्रमुख! को भवान् केन कर्मणा नीचामेनां योनिमुपगतः केन च कर्मविपाकेन पुनरद्यानवद्यामिमां दशामुपगत इति श्रोतुं वयं सर्वेप्यस्मद्गुरुजनाश्चातुरतरस्वान्ता एव तत्कथयिष्यसि स्ववृत्तमित्याशास इति राजकुमारंप्रति वाचमुवाच । राजकुमारश्च मातश्चन्द्रप्रभे! यदि युष्माकं युष्मद्गुरुजनानां चास्ति मद्वृत्तश्रवणेऽतिकौतुकं तर्हि श्रूयतामित्युक्त्वा वक्तुमारभत ।

अस्ति समस्तप्रशस्तमुनिगणसेव्यं गन्धमादनपर्वतान्तःपाति शिवतपोवनं नामातिपावनं वनम् । तस्मिन्निवसतोऽरण्यमार्जारस्यातिजरठस्याहमेक एव पुत्र आसम् । एकदा चात्यक्तस्तन्यपानएव मयि मातरं पितरं च मे कालप्रहितः कश्चिद्वृकः कृतान्तनिशान्तातिथितां निनाय । ततः क्षुत्पिपासापरीततया समासन्नप्राणप्रयाणसमयमितस्तत आकुलाकुलमालुण्ठन्तं मामकारणकरुणावरुणालयः परमशैवगणशिरोमणिः शिवतपोवनं गच्छन् मुनिमण्डलाखण्डलो भगवान् वामदेवो विलोक्य संजातदयोदयोऽभिनवकमलकोशकोमलेन पाणिनादाय परमशिवदर्शनायान्तर्वनमाविवेश । तदीयपाणिपद्मस्पर्शप्रभावादेव विस्मृताशेषदुःखजालेन मया या या तस्य वनस्य शोभा लोचनगोचरीकृता न तास्तां वर्णयितुमस्मि शक्तः । किं तन्नगानां किं तन्मृगाणां किं तत्खगानां किं तदाश्रमाणां किं तन्निवासिनां मुनीनां किं मुनिपत्नीनां किं मुनिकुमाराणां किं मुनिकुमारीणां किं योगिनां किं सिद्धानां वा शोभां वर्णयामि । कोऽप्यवर्ण्य एव तद्वनस्य शोभातिशयस्तत्रापि चन्द्रनीलमणिगणप्रभावलेपलोपिपल्लवप्रकरस्य माणिक्यमानापनोदनिपुणफलनिकरस्य सान्द्रसान्द्रतरच्छा-

यानिस्तापीकृतसकलपर्यन्तप्रदेशस्य वटविटपिनस्तले निषण्णं परमेश्वरं सतीपतिं साक्षात्कृत्य चक्षुषा कृतकृत्य इव निरवधिसुधासिन्धुमध्यमग्न इव निर्विकल्पसमाधिलीन इव संप्राप्तब्रह्मानन्दपद इव चाहमभवम् । वामदेवस्तु मां स्फटिकशिलायां निधाय परया भक्त्या शतशो दण्डवत्प्रणामान् भगवतो भूतपतेः पदपद्मयो रचयांचकार । तदन्ते च वत्स वामदेव! केषु केषु तीर्थेषु केषु केषु क्षेत्रेषु केषु केष्वरण्येषु केषु केषु पुण्याश्रमेषु चाद्यावधि भवता कालनिर्गमनं कृतं तत् ज्ञातुमिच्छामीति सादरं सप्रीतिप्रसरं च सदाशिवेन परिपृष्टश्च वामदेवो व्यजिज्ञपत् । भगवन्! सर्वज्ञस्य सर्वान्तर्यामिणश्च भगवतः किमिवाज्ञातं तथाऽपि भक्तवत्सलतया पृच्छसीति निवेदयामि । पूर्वपश्चिमदिक्स्थितानि सर्वाणि तीर्थानि सर्वाणि क्षेत्राणि सर्वाण्यरण्यानि सर्वे पुण्याश्रमाश्च निषेवितास्तत्र तत्र निवाससुखमनुभवता च मया सर्वत्र प्रणतवत्सलस्य ते निष्प्रतिमा प्रणतपालकता निरुपमा दयालुता जगत्प्रसिद्धा भक्तवत्सलता विश्वविख्याता दीनबन्धुता पृथ्वीप्रख्याता पतितपावनताऽद्वितीयाधमोद्धारकताऽनन्यसमा चाशुतोषता सर्वैर्गीयमानानुदिनमनुक्षणं श्रवणाभरणतां नीता । ततः प्रतिनिवर्तमानेन भगवद्दर्शनार्थमत्रागच्छता चाध्वनि मरणनिर्विशेषां दशामनुभवन्नयं बिडालबालकोवलोकितो विलोक्य चानाथमिममनाथनाथं संप्रार्थ्य भुक्तदुःखं करिष्यामीति विचारितम् । तदमुं मे मनोरथं भक्तवत्सलो भगवान् पूरयिष्यसीत्याशासे इत्युक्त्वा वामदेवो मां श्रीचन्द्रचूडामणेश्चरणनखचन्द्रचन्द्रिकाच्छुरितस्य माणिक्यमणिमयपादपीठस्यादूरे निवेशयामास । निष्कारणकरुणावरुणालयो देवदेवो महादेवोऽपि मां निपुणं निर्वर्ण्य मन्दस्मितं वामदेव! विषविषमपरिणामा ह्यविमृश्यकारितेत्यवदत् । ततो वामदेवस्तु महादेवं प्रणम्य भगवन्! प्रसीद निवेदय कीदृश्या अविमृश्यकारितायाः परिणामो-

ऽयमनेनानुभूयत इत्यप्रार्थयत् । वामदेवप्रार्थनापरितुष्टः पिनाकपाणिर्वामदेव ! श्रूयतां यदि कौतुकमित्युक्त्वा वक्तुमारभत ।

सन्ति विश्वंभरावलयविख्याता अङ्गवङ्गकलिङ्गाख्या अतिसमृद्धा देशविशेषाः । कतिपयेभ्यः संवत्सरेभ्यः पूर्वमङ्गदेशस्य राज्यासनं वीरसेनो वङ्गदेशस्य कीर्तिसेनः कलिङ्गदेशस्य चित्रसेनश्चालंचकार । पृथक्पृथग्देशाधिपतयोऽपि ते केनापि पूर्वजन्मसंबन्धप्रतिबद्धेनेवाप्रतिमेन मैत्रीधर्मेण परस्परं सोदरनिर्विशेषं स्निह्यन्तो देहमात्रभिन्ना अभिन्नहृदया अभिन्नाचारा अभिन्नविचाराश्चासन् । आबाल्यादेव प्रबद्धप्रेमाणोऽपि ते यथा यथा प्राप्तवयस्काः प्राप्तस्वातन्त्र्याः प्राप्तज्ञानचक्षुःप्रकाशाः संबभूवुस्तथा तथा मित्रधर्मपरिपालनप्रवीणान्तःकरणाः परस्परप्रियहितान्यप्रेरिताः समाचेरुः । तेषां विद्वत्ता विवेकिता विनयिता धीरता वीरता गम्भीरता सुजनता सरलता सुशीलता दाक्षिण्यता दयालुतौदार्यता श्रुतज्ञता कृतज्ञता गुणज्ञता गुणिता चातीव प्रशस्याऽऽसीत् । निष्प्रतिमप्रेमपरतन्त्रतया च ते कुलपरंपरागतेभ्यः प्रधानेभ्यो राज्यभारं समर्प्य परस्परविरहभीरवः सहवाससुखान्यन्वभवन् । कदाचित्कीर्तिसेनचित्रसेनौ वीरसेनस्य कदाचिद्वीरसेनचित्रसेनौ कीर्तिसेनस्य कदाचिच्च वीरसेनकीर्तिसेनौ चित्रसेनस्य राजधान्यां न्यवसताम् । कदाचिच्च ते नानानगनगराश्रमारामावलोकनोत्कण्ठया परितः परिभ्रमन्तस्तत्तत्पुण्यक्षेत्राश्रमारण्यनिवाससुखान्यनुभवन्तः शिखरिशिखरसहस्रशोभां विलोकयन्तो मुनिमण्डलानि तत्रस्थानि प्रणमन्तः पूजयन्तः प्रसादयन्तश्चंक्रमणक्रमेणासेदुः कस्याप्यतिरमणीयसानुशतसंकुलस्याचलस्य पादप्रदेशान् । तत्र विधाय सेनासन्निवेशं त्रयोऽपि ते राजानः किमस्ति गिरिगुहाभ्यन्तरे इति विलोकनसकुतूहला गिरिदर्या उदरं प्राविशन् । योजनचतुष्टयमात्रमन्धकारमयमध्वानमुल्लङ्घ्य हृदयनयनानन्दप्रदाशेषप्रदेशं विमलवैडूर्यमणिद्रवानुकारिवारिपूर्णं परितः प्रबद्धसो-

पानपरम्परोपशोभितं विकचानेकविधराजीवराजीविराजितं मदकलमरालमालालंकृतं मानसमिवापरं सरः संददृशुः । तस्य च पश्चिमे तीरे शोभमानस्य महेश्वरमन्दिरस्य सभामण्डपं समारूढसमाधितया निष्प्राणमिव निभृतनिश्चलगात्रं तपःप्रभावपात्रं कमपि मुनिप्रवरं च लोचनगोचरं चक्रुः । तद्दर्शनोत्तरक्षण एव त्रयोऽपि ते तस्मिन्मुनिप्रवरे महेर्ष्यारोषविवशाः संवभूवुः । कदा मुनिममुं विस्मृतसर्वयोगक्रियं करिष्याम इत्युत्त्वरतया त्वरया बहिर्निष्क्रम्य शृङ्गारमञ्जरीं लावण्यलतिकां कह्लारकलिकां च रह आहूय प्रोचुः । अय्यप्सरसः ! पर्वतस्यास्य गुहोदरे योजनचतुष्टयमात्रमन्धकारमयमध्वानमुल्लङ्घ्य दृष्टोऽस्माभिः सरस्तीरे शिवमन्दिरस्थः कोऽपि तपस्वी । तद्दर्शनादेव तत्तपोभङ्गे प्रवृत्तमस्माकं मनस्तत्सर्वाभिर्युष्माभिस्तत्र गत्वा तस्य तपोभङ्गो विधेय इति । शृङ्गारमञ्जरी तु देव ! युष्मदाज्ञापरतन्त्रोऽयं जनस्तथापि दुःखपरिणामं हि पराहितकरणमिति विचार्य निवर्त्यतामस्मान्निर्बन्धादित्युक्त्वा व्यरंसीत् । लावण्यलतिका यदुक्तं शृङ्गारमञ्जर्या तत्रान्वक्षरमनुमतिर्मे । न खलु तपस्विनस्तस्य तपोभङ्गादस्माकमनिवारणीयानुतापप्रदं शापमन्तरान्यत्प्रापणीयम् । संप्राप्तमोहेऽपि वास्मत्प्रयासैस्तस्मिन् तपस्विनि किं तत्तपोभङ्गजन्यमहापातकादन्यत् फलं न किंचिदतो युक्तमेतस्माद्दुराग्रहान्निवर्तितुमित्युक्त्वा मौनमालम्बे । कह्लारकलिका तु महाभागाः सर्वज्ञानां युष्माकमग्रे स्वल्पज्ञाया मम वक्तुमधिकार एव नास्ति तथापि युष्मत्कृपया किंचिद्वक्तुमीहे तच्च्ब्रोष्यथाविवेकं च मे क्षमिष्यथेत्याशासे । चतुर्वर्गप्राप्तिफला हि विदुषां प्रवृत्तिरिति महात्मनां मतं तत् पृच्छामि भवतः सेयं युष्माभिस्तस्य तपस्विनस्तपोभङ्गे कृता प्रवृत्तिः किं धर्मं फलिष्यति किमर्थं फलिष्यति किं कामं फलष्यति किं वा मोक्षं फलिष्यति मन्ये प्रत्युताधर्माद्यनर्थपरंपरा एव फलिष्यति । मोक्षस्य त्वाशैव कुतोऽस्या दुःप्रवृत्तेः । स्वकृत्यान्यसंख्यानि परिहाय विदुषामपि युष्माकमन्तः-

करणानि दुष्कृत्येऽस्मिन् प्रवर्तन्ते सांप्रतं तेन मन्ये दुःखद एव कश्चिदेतत्परिणाम आगमिष्यतीत्यतः स्थलमेतद्विहाय दूरगमनमेव हितमस्तीत्युक्त्वा तूष्णींमासीत् । ते तु त्रयोऽपि राजानः क्षणं किमपि विचार्य प्रोचुः । अयि शृङ्गारमञ्जरि अयि लावण्यलतिके अयि कह्लारकलिके च युक्तैव युष्माकमुक्तिः सर्वथा प्रशंस्यानि भवतीनां वचनानि रोचन्ते च तानि तानि वो वचनान्यस्मभ्यम् । यद्यपि निःशङ्कं जानीमहे पराहितकरणं न कदाचिदपि शुभोदर्कमिति न खलु तत्तपोभङ्गे सिद्धेऽपि कश्चिन्नः स्वार्थः सेत्स्यतीति च तथापि दैवयोगाद्वावियोगात्पूर्वजन्मबद्धेन तेन सह केनापि वैरयोगेन वाऽस्मन्मनांसि तत्तपोभङ्गकरण एव प्रवर्तन्ते । न च तन्निदानं विद्महे । ततो यदि यूयमस्माकं प्रियकारिण्यो हितकारिण्य आज्ञानुसारिण्यश्च तर्हि न विचार्य नः प्रियाप्रिये शुभाशुभे हिताहिते लाभहानी च भवतीभिस्तत्तपोभङ्ग एव प्रयतितव्यमिति दुराग्रहग्रहग्रस्तानां राज्ञां वचांसि निशम्य महाभागा युष्मदाज्ञापरतन्त्रा एव वयं तदिदानीं तपस्वितपोभङ्गाय गच्छामः । प्राणार्पणैरपि युष्मदभिलषितं पूर्णं करिष्याम एव तथापि हृदयेऽनुक्षणं प्रादुर्भवता भयेन कम्पेन दिवि भुवि वपुषि च सांप्रतं प्रादुर्भवद्भिर्दुर्निमित्तैश्च नैतच्छुभपरिणामं भविष्यतीति निवेद्यते । प्रायो मोहयिष्याम एव हावभावविलासैस्तं तपस्विनं परं यदि कदाचिन्मोहमप्राप्यास्मान् स्वरोषवैश्वानरे हव्यकव्यद्रव्यतां नयिष्यति तथापि युष्मत्कार्योपयोगेन मरणमपि मङ्गलं मन्यामहे । न खलु तद्विषयः क्लेशलेशोऽप्यस्मच्चित्तेषु परं गिरिदर्यां चिरायमानास्वस्मासु स्थलमेतद्भवद्भिः शीघ्रमेव परिहर्तव्यं न चेत् स तपस्वी युष्मानपि पराभविष्यतीति भिया भूयोभूयः सप्रणामं प्रार्थयामहे । इत्युक्त्वा प्रणम्य चाप्सरसस्ता अभिगिरिगुहामुखं प्रतस्थुः । विपरीते हि विधावकृत्यमपि कृत्यमिवाहितमपि हितमिवाशुभमपि शुभमिव हेयमप्युपादेयमिव पश्यन्ति मनुष्याणां मनोवृत्तय इति न केषा-

मप्यविदितम् । तथैव राज्ञां मनोवृत्तयोऽप्युग्रतपस्तपःखण्डनमेव परमं कृत्यमन्यन्त । अप्सरसस्तु यथास्वबुद्धिवलवैभवं संप्रार्थ्याप्येतन्निर्बन्धनिवृत्तये निष्फले स्वप्रयासेऽनुल्लङ्घनीया राज्ञामाज्ञेति ततः प्रस्थिता अतिकष्टेन गिरिगुहान्धकारमुत्तीर्य सरससरस्तटनिकटशिवसद्मनि पद्मासनस्थमपि समाधिस्थमुग्रतपसं नाम तपस्विनं विलोकयामासुः । तद्विलोकनक्षण एवाप्सरसां प्रास्फुरन्त दक्षिणान्यङ्गानि प्रादुरभून्मनःसु भयं आविरभूच्च गात्रेषु कम्पस्तथापि संधार्य धैर्यं शृङ्गारमञ्जरी सखि लावण्यलतिके ! सखि कह्लारकलिके ! विदितमेव भवत्योर्यदस्य तपस्विनस्तपोभङ्गकरणाचरणादस्मन्मनोरथभङ्ग एव भविष्यतीति । न जाने किं केनाऽपि पापयोगेन किं केनापि शापयोगेन किं केनापि पूर्वजन्मवैरयोगेन किं केनापि भवितव्यतायाः प्रभावेण वा निष्कारणमस्मिन्तपस्विनि तेषां राज्ञामीर्ष्यावेशविवशाशयत्वमकस्मादाविरभूत् । यदस्तु तदस्त्वस्माभिस्तु तदाज्ञैव परिपाल्याऽतो मुनिवरोयं मोहमुपनेयस्तस्य शापाग्नौ वा शलभतां गन्तव्यमिति गतिद्वयमेवास्माकं न तृतीया । तदहं पूर्वं मुनिमोहनाय गच्छामि । भवतीभ्यां कुञ्जभवनेऽस्मिन्निलीय स्थेयम् । निष्फले मत्प्रयासे मुनिराजशापवशीभूतायां च मयि लावण्यलतिकया यथाबुद्धिवलं तन्मनोमोहनाय प्रयतितव्यम् । तस्यामपि निरर्थप्रयासायां मुनिशापवशायां कह्लारकलिकया तन्मोहनप्रयत्नप्रयासं परित्यज्य तत्प्रसादसिद्धये प्रयतितव्यम् । प्रायः क्षणिकरोषा हि महात्मानो भवन्तीति शान्तरोषेऽस्मिन्मुनिराजे तस्मादस्मदुपकारिणां राज्ञामस्माकं च पापशापोद्धारः प्रार्थ्यः । किंचाद्यावधि मयि मान्यबुद्धिं कृतवतीभ्यां भवतीभ्यां बहूपकृतास्मि । परमेश्वरप्रसादेन राज्ञां युवयोश्चास्तु कल्याणपरंपरेति प्रार्थये परमेश्वरमित्युक्त्वा शिवालयंप्रति गन्तुं यावदुपचक्रमे तावत्कह्लारकलिका प्रियसखि शृङ्गारमञ्जरि बुद्ध्या गुणैः कलाकौशल्येन वयसा च भवत्येवास्मदपेक्ष-

याऽधिकासि । साधारणस्यापि मनुष्यस्य बुद्धिपूर्वमपराधं विधाय पुनस्तस्य प्रसादः संपादनीयस्तदतिदुष्करं किं पुनस्तपस्विनोऽपराध्य प्रसादसंपादने वक्तव्यम् । ततो मामेव प्रथमं तत्र गन्तुमाज्ञापयतु भवती । मयि मुनिशापलीनायां लावण्यलतिकां प्रेषयिष्यसि । तस्यामपि मुनिशापप्रणष्टायां भवत्या मुनिमनःप्रसादायास्माकं शापोद्धाराय च प्रयतितव्यमित्यवोचत् । कह्लारकलिकावचनविरामोत्तरक्षणएव लावण्यलतिका सखि शृङ्गारमञ्जरि कह्लारकलिकावचनेषु प्रत्यक्षरमनुमतिर्ममेत्यवदत् शृङ्गारमञ्जरी तयोस्तानि वचनानि निशम्य सख्यौ ! भवत्यौ हि मे सहोदरस्वसृसमे स्तस्ततः प्रथमं ममैवैतादृशे विषमे गन्तुमुचितम् । तथापि यद्येवं युवयोराग्रहस्तर्हि निरुपायाऽस्मि । त्रपामपाकृत्य मृत्युभयभीतेव समराङ्गण इवातिविषमेऽस्मिन्कार्ये युवामाज्ञापयामि परं निःशङ्कमवगन्तव्यं प्रयत्नसहस्रैः संप्रसाद्य तं मुनीश्वरं राज्ञां युवयोश्च शापोद्धारं कारयिष्यामि । नैतावदेव युवयोराशापक्षयादहमपि युष्मद्दशामेवानुभविष्यामीत्युक्त्वा नयनयुगलगलदश्रुसलिला व्यरंसीत् । कह्लारकलिका शृङ्गारमञ्जरि यद्यदुच्यते तत्तत्कर्तुं प्रभवति भवतीति निःशङ्कमवैमि तदयं मे प्रयाणप्रणामो भवतीभ्यामित्युक्त्वा लतामण्डपान्निष्क्रम्याभिशंभुभवनं प्रतस्थे । उत्सृज्य मृत्युभयं परित्यज्य शापभयं न प्रगणय्य दुःखशङ्कां सधैर्योत्साहया तया सनृत्यं गानमारब्धम् । कह्लारकलिकाया गीतमाधुर्येण नृत्यलालित्येन च सचेतना अपि निश्चेतना इवासन् निश्चेतना अपि सरोमाञ्चा इवासन् । किंबहुना निःसंज्ञनिश्चलहरिणीसमूहो वाचंयमकोकिलकुलः सकलोऽपि प्रदेशः संमोहित इवासीत् । आजन्मपरिचयवत्यावपि लावण्यलतिकाशृङ्गारमञ्जर्यौ विस्मयविस्मृतनिमेषे निःसंशयं जयिष्यत्येषा मुनिप्रवरं न कदाचिद्दृष्टपूर्वमीदृशं कलाकौशल्यमस्माभिरस्याः प्रियसख्या अथवा निर्व्यलीका स्वामिभक्तिः समुत्पादयति कार्यशक्तिमित्यन्योऽन्यं सपरितोषमूचतुः । कह्लारकलिका तु शनैः

शनैः शिवमन्दिरसभामण्डपमधिरुह्य प्रणतजनपापसंतापहरं हरं प्रणम्य च सुस्वरं जगौ लास्यलीलां च रचयाञ्चकार । तस्या अत्युच्चैः स्वरेण गानेन मञ्जीरमञ्जुसिञ्जितेनागणितकिंकिणीनां निःस्वनेन चोपरतसमाधिरुग्रतपास्तपस्विप्रवरो नयननलिनयुगलं समुन्मील्यापादमस्तकममूल्यमाणिक्यमयालंकारालंकृततया माणिक्यमयीं शालभञ्जिकामिव स्थितां माणिक्यमयालंकारकिरणनिकरैः स्थलचरजलचरसहितं खगमृगनगसहितं सकलमपि प्रदेशं माणिक्यमयमिव कुर्वन्तीं कह्लारकलिकामपश्यत् । सा तु समुन्मीलितलोचनयुगलं मुनिं प्रणम्य पुनः सहावभावमतिमनोहरं ननर्त जगौ च । मुनिस्तु तस्या गानेन नृत्येन चाप्राप्तमोहलेशः पुनर्नेत्रे निमील्य कुतोस्मिन्निर्जने वनेऽस्या आगमनं कुतोऽस्या अमनुष्यलोकोचितं स्वरे माधुर्यं लास्ये लालित्यं वपुषि सौन्दर्यं च किंनिमित्तश्चास्या अत्रागमनप्रयासोऽयं चेति विचारयामास । ज्ञानदशाऽवगतसर्ववृत्तान्तः क्षणेन नेत्रे समुन्मीलयामास । कह्लारकलिकापि समुन्मीलितलोचनस्य भगवत उग्रतपसश्चरणयोः प्रणयप्रणता पुष्पाञ्जलिं समर्प्य प्रबद्धकरकमलयुगला शालभञ्जिकेव स्तम्भावलम्बा निभृतनिश्चलनिमेषाऽग्रतस्थे । तथाविधां तां दृष्ट्वा स तपस्वी वत्से कल्हारकलिके जानामि त्वां देवकन्यां या मदपराधेनैव देवलोकभ्रष्टा मनुष्यलोकेऽवतीर्णास्यत्रापि स्वपतिनिदेशान्मां मोहयितुमुपागतासीति । नायं तव पत्युरपराधो न च तवाप्यपराधः किंतु दुःसङ्गतेरेवायमपराधो या जन्मान्तरगतानपि प्राणिनः स्वप्रभावमनुभावयति । तथाऽपि न महान्तमनुतापमननुभूय मनुजनुर्विरतिमुपैति दुष्कृत्यात्तद्भव त्वं माणिक्यमयीशालभञ्जिका सचराचरः प्रदेशोऽप्ययं भवतु माणिक्यमयो नैतावदेव यः कश्चिदत्रागमिष्यति सोप्यहोरात्रं निवसन्माणिक्यमयो भविष्यतीति शशाप । मुनिवचनविरामोत्तरक्षणएव सा माणिक्यमयी शालभञ्जिका बभूव । प्रदेशोप्यशेषस्तादृशएव संबभूव । महात्म-

नोऽपि रोषावेशो निष्प्रतिक्रियानुतापपात्रतां नयतीति लोकोक्तिर्न मृषा । ततः सद्य एवोग्रतपसस्तपस्विनो मनसि समुदभून्महाननुतापो येन हन्त रोषावेशविवशेन मया किमेतदाचरितम् । धिङ्मां धिङ्ममाविमृष्यकारितां च यया मया न केवलं ममैव किंत्वत्र निवसतां निवत्स्यतां च सर्वेषां प्राणिनां सुखभङ्गः कृतः । हा हन्तानभिज्ञः कश्चिदभ्येत्यैतत्स्थलं दिवानक्तंनिवसन् मच्छापान्माणिक्यमयो भविष्यतीति किमल्पस्यांहसो मूलमित्यादि बहुविलप्य लोहकीलेन माणिक्यमयशालभंजिकावलंबितायां शिलायां

नात्र स्थेयं मानवेन देवेन दानवेव वा ।
यदि स्थास्यत्यहोरात्रं पद्मरागो भविष्यति ॥
दैवादेवागतेनात्र पूर्वस्य पश्चिमस्य वा ।
गिरेरेषा गुहा सेव्या नात्र स्थेयं कदाचन ॥

इति श्लोकद्वयं लिखित्वा स्वयमप्येणचर्मकमण्डलुकुशासनोर्णासनाक्षमालाभस्मपात्रादिकं सर्वं गृहीत्वा स्वकृत्यात्स्वयमेव बिभ्यन् पश्चिमगिरिगुहामवजगाहे । अदर्शनदशामनुभवति च मुनौ शृङ्गारमञ्जरी लावण्यलतिका च समीपमुपेत्य कह्लारकलिकायाः सखि कह्लारकलिके ! दिष्ट्या न भस्मीकृतासि शापाग्निना तपोनिधिना । ब्रूहि प्रियसखि किमब्रवीन्मुनिराजस्त्वाम् । गीते नृत्ये च कौशल्यं त्वदीयमदृष्टपूर्वं दृष्टमद्यास्माभिः । कथं किमपि न ब्रवीषि । न खलु हृदयतुल्यस्य सखीजनस्याग्रे सौन्दर्यगर्वमौनमुचितमित्याद्युक्त्वाऽप्यप्राप्तप्रत्युत्तरे ते निपुणं निर्वर्ण्य हा किं सकलसद्गुणसद्मभूताऽपि त्वं पद्मरागरूपासि मुनिमन्युप्रभावेण हा हते स्व इत्युक्त्वा मूर्च्छिते पेततुः । मुहूर्तात्प्राप्तसंज्ञे च ते यावत्परितो विलोकयामासतुस्तावत् ये ये प्रदेशाः पूर्वं तयोरानन्ददा बभूवुस्त एव विषादप्रदा बभूवुः यानि यानि स्थलानि तयोर्मनोविनोदायाऽभवन् तान्येव मन उद्वेजयामासुः ये ये लतामण्डपास्तयोर्हृदयाह्ला-

दिनोऽभूवन् त एव हृदयभेदिनोऽभूवन् ये ये शकुन्तकुलकोलाहलास्तयोः श्रवणसुखदा आसन् तएव श्रवणशूलतामगच्छन् ये ये विविधलतावृतास्तरवस्तयोर्नयनप्रिया आसन् तएव नयनाप्रियतामगच्छन् कह्लारकलिकायां वियोगेन । तथापि क्षणं विश्रम्य लावण्यलतिका प्रियसखीवियोगखिन्नां मौनमालम्बमानां शून्यचित्तां च शृङ्गारमञ्जरीं प्रत्यब्रवीत् । मातः शृङ्गारमंजरि ! नायं कह्लारकलिकाया विनाशोऽचिन्तितपूर्वोऽस्ति । यदैव राजभिराज्ञप्तास्तपस्वितपोभङ्गाय वयं तदैवास्माकं सर्वेषां दुष्परिणतिः कापि भाविनीति ज्ञातमेव तत्किमिदानीं विषादेनौदास्येन वैराग्येण वा । दूरीकृत्य विषादमपास्यौदास्यं विसृज्य वैराग्यं संधार्य धैर्यं सज्जीकृत्य साहसं प्रोत्साह्य चोत्साहमस्मत्कर्तव्य एवेदानीं मनो देयं येनाभिलषितसिद्धिर्मुनिकोपानलभस्मता वा भविष्यतीति । लावण्यलतिकावचनविरामे युक्तमुक्तं भवत्या भवत्या । आशयज्ञानायैव मौनावलम्बनं मे । कह्लारकलिकारूपं सखीरत्नं दैवेनापहृतं ततो न त्वां तस्य तपस्विनस्तपोभङ्गाय प्रेषयितुं मन उत्सहते मे किंत्वहमेव तत्तपोभङ्गाय गच्छामि । मयि तदीयशापपराभूतायां भवत्या तन्मनःप्रसादः संपाद्य इत्युदीर्य प्रस्थातुमुपचक्रमे । लावण्यलतिका तु तां करे गृहीत्वा सखि शृङ्गारमञ्जरि कृतपूर्व एवास्मिन् विषये विचारोऽस्माभिरैकमत्येन नायमन्यथा विधेयः । किं चातिदुष्करं हि भवतीकृत्यं न तत्कयाप्यन्यया कर्तुं शक्यते । सर्वेषामप्यस्माकं हितायैव भवत्या एतज्जीवनं नात्मार्थं ततस्तद्विषयविषादमुन्मुच्यानुजानीहि मां तत्र गमनायेति प्रावदत् । तां च यद्येवमाग्रहस्ते तर्हि प्रतिपालयाहमपि सहैव ते समागमिष्यामि । तत्र क्वचिल्लतामण्डपान्तरिता भूत्वा द्रक्ष्यामि ते संगीतदाक्षिण्यम् । परमेश्वरस्तवाभीष्टं पूरयिष्यत्येव । यदि कदाचित्कह्लारकलिकेव निसर्गकोपनान्मुनेः शापमनुभूयास्तथापि यथामत्प्रतिज्ञं सर्वमहं करिष्यामीति निःशङ्कमवगच्छेतिवदन्त्युत्थाय माणिक्यमयं शिव-

लिङ्गं प्रणम्य माणिक्यमयीं कह्लारकलिकामालिङ्ग्य च सखि यत्र गताऽसि तत्र विश्वसेर्न शृङ्गारमञ्जरी त्वां दुःखादस्मान्नविमोच्य जीविष्यतीत्युक्त्वा शृङ्गारमञ्जरी लावण्यलतिकया सह तपस्विनस्तया पदपंक्त्या गिरिगुहोदरं प्रविवेश । ध्वान्ताद्वैतमुल्लङ्घ्य बहिर्निर्गते ते पुरोवदतिरम्यं सरो रम्यं शिवमन्दिरं रम्याश्च वनराजीर्ददृशतुः । पूर्ववत्तत्रापि शिवमन्दिरस्थं समाधिनिष्टं तपस्विशिरोमणिं चालोक्य लावण्यलतिका सखि शृङ्गारमञ्जरि ! पश्य मुनिराजो विराजते शिवमन्दिरेऽस्मिन् तत्त्वयात्रैव लतामण्डपे निलीय तूष्णीं स्थातव्यमहं पुनर्गच्छामि तन्मनोमोहनायेति प्रावोचत् । शृङ्गारमञ्जरी तु सखि ! स्वीकृतं ते वचनमित्युक्त्वा लतामण्डपे निलीय तस्थौ । लावण्यलतिका च प्रति शिवमन्दिरं प्रतस्थे । अवर्ण्यलावण्यरसार्णवायमानमूर्तिर्लावण्यलतिका स्वाङ्गकान्त्या मणिमयानप्यलंकारान् तिरस्कुर्वन्ती वस्त्रालंकारलब्धलावण्यातिशयं सौन्दर्यं न सौन्दर्यमिति मन्यमाना च नाबाल्यादपि कदाचिदप्यलंकारान् दधार न च हंसपिच्छच्छवि निर्मलं निर्मोकलघु शुक्लाम्बरमन्तराऽन्यरागरञ्जितं वस्त्रमपि धारयति स्म । केवलं स्वभावसिद्धशिवभक्तितया कण्ठे स्फटिकमणीनामेकावलीं कर्णयोः स्फटिकमणिमयौ कर्णपूरौ पाण्योः स्फटिकमणिमये कङ्कणे च वसानापि समुपहसितस्फटिकमणिमहसा नैसर्गिकेण वपुःप्रभाप्रभावेण सकलमपि तं प्रदेशं स्फटिकमणिमयमिव कुर्वन्ती मुनिराजसमीपमुपेत्य सलास्यलीलं जगौ । तस्याः सङ्गीतेनैव प्रोषितसमाधिदशो मुनिमौलिरुग्रतपाः पूर्ववत् सर्वं ज्ञानदशा ज्ञात्वा वत्से लावण्यलतिके ज्ञातासि या त्वं देवकन्या भूत्वा ममैवापराधं कृत्वा देवलोकभ्रष्टा मनुष्यतां गतासि तथापि पुनः स्वपतिनिदेशान्मां मोहयितुमुपागतासीति तद्भुङ्क्ष्व स्वस्यैवाविवेकस्य फलम् । भवाधुनैव स्फटिकमणिमयी शालभञ्जिका प्रदेशोऽप्ययमखिलः स्फटिकमणिमयो भवत्विति शशाप । ततः सद्य एव सा सहसा सहैव तेन प्रदेशेन स्फटिकमणिमयतामगच्छत् ।

मुनिरपि पूर्ववत् यदि स्थास्यत्यहोरात्रं स्फटिकोऽत्र भविष्यतीति लेखं लिखित्वा गृहीत्वा च स्वोपकरणं सर्वं पुनः पश्चिमगिरिगुहां प्रविवेश । शृङ्गारमञ्जरी च पश्चिमगिरिगुहागते तस्मिन् मुनिप्रवरे शिवमन्दिरमभ्युपेत्य प्रणम्य स्फटिकमणिमयं शिवलिङ्गं विलोक्य स्फटिकमणिमयीं लावण्यलतिकां साश्रुसलिलासारपातं दीर्घमुष्णं च निःश्वस्य मुनिवरचरणपङ्क्त्यनुसारेणैव गन्तुमुपचक्रमे । पश्चिमगिरिगुहान्तर्गतं निबिडतमं तमःसमूहमुल्लङ्घ्य बहिर्निर्गतायास्तस्या लोचनगोचरतां जगामातिविशालं सरससारसालिशालि सज्जनमन इवातिनिर्मलं संतप्तजनमनःसंतापहारि मनोहारि नीलमणिनीलिमानुकारिवारिपूर्णं सरस्तदीयपश्चिमतीरगतशिवालयस्थितो महामुनिश्च । सा तु दूरस्थितं लतामण्डपमाश्रित्य सर्वं मुनेस्तस्य वासरकृत्यं विलोकयामास । द्वितीयाह्नादारभ्य समाधिभाजि मुनिराजे सर्वं पूजोपकरणं स्वयं सज्जं कृत्वा पूजयित्वा प्रणतप्रियंकरं शंकरं पुनर्लतामण्डप एव निलीय तस्थौ । समाधिप्रबुद्धश्च तपस्वी सर्वं पूजोपकरणं सज्जं विलोक्य साश्चर्यपरितोषं सरसि स्नात्वा कृतयथोचितनित्यक्रियो विरचितपशुपतिपूजनः पुनरपि समाधिसुखमनुबभूव । सा तु पुनरपि तत्र शनैः शनैरभ्येत्य मुनेर्वल्कलानि क्षालयित्वाऽतिनिर्मलानि चकार । गन्धलोभाकृष्टपुष्पंधयसंघसंघुष्टानि सुगन्धिपुष्पप्रकरपूर्णानि पत्रनिर्मितानि पात्राणि वैडूर्यद्रवानुकारिवारिपूर्णं कमण्डलुमाश्यानहरिचन्दनरसपूर्णं पत्रपुटं च तन्निकटे निधाय शिवमन्दिरादारभ्यासरस्तीरं सर्वमपि मार्गं संमार्ज्य सलिलेन संसिच्य प्रकीर्णपुष्पप्रकराच्छादितं च कृत्वा स्वयं विधाय शिवपूजनं प्रणम्य मुनिप्रवरं पुनस्तस्मिन्नेव लतामण्डपे निलीना दिनं निर्गमयामास । समाधिप्रबुद्धस्तपस्वी तु पूजोपकरणानां सज्जतामासरस्तीरं मार्गस्य रम्यतां विलोक्य विलसितमेतत् कस्यापि भक्तस्य निःसीमभक्तेरिति विचारयन् स्नात्वा समर्च्य चन्द्रचूडामणिं पुनः समाधिं बबन्ध । एवं शृङ्गारमञ्जरी षण्मासावधि निर्व्यलीकमनोवाक्काय-

कर्मभिः परमां परमेश्वरस्य परमेश्वरनिर्विशेषधिया मुनीश्वरस्य च तस्य भक्तिं चकार । वामदेव ! न भक्तितुल्यमन्यन्निःश्रेयससाधनमस्ति जगत्यामिति नाविदितं ते । निर्व्यलीका भक्तिर्हि भक्तानां कामदुघेव कामान्दुग्धे कल्पलतेव संकल्पितानि फलति चिन्तामणिरिव चिन्तितानि पूरयति । निष्कपटया तयैव सुरा असुरा नराः किन्नराः खगा मृगा ऋक्षा यक्षा रक्षांसि वानराश्च सहस्रशः सिद्धिमुपयाता उपयान्ति च । न ज्ञातिं न जातिं न सुरूपं न कुरूपं न सुकुलं न दुष्कुलं न सुगुणं न दुर्गुणं न विद्वांसं नाविद्वांसं न सधनं न निर्धनं च विलोकयति भक्तिः । केवलं स्वाश्रितान् पतितपतितानप्यधमाधमानपि च प्राणिनस्त्वरिततरमेव परमेश्वरप्रसादानां निःशेषनिःश्रेयससंपदां निखिललोकलोकपालाभिवन्द्यतायाश्च पात्रतां नयतितरां नितराम् । शृङ्गारमञ्जर्या निःसीमप्रेम्णा विरचिता मुनिवरवरीवस्या कल्पवल्लरी कथमेव निष्फलतामवलम्बेत । एकदा कोयमनुदिनमेवंविधां मे भक्तिं करोतीति ज्ञातुं समुत्सुकेन परिसमापितसायंसमयसमस्तकृत्येन मृषासमाधिनिमीलिताक्षेण तेन मुनिना विलोकिता सर्वा शृङ्गारमञ्जरीकृता निस्तुला भक्तिः श्रुतानि च सदाशिवपदार्हणावसाने सप्रणामम्

मुनेरस्य तपःसिद्धिरविघ्नास्तु दयानिधे ।
ममोपकारिणः सन्तु राजानः सुखिनः सदा ॥
वत्सा कह्लारकलिका लावण्यलतिकापि मे ।
प्रियसख्यौ शापमुक्ते भवतां त्वत्प्रसादतः ॥
तयोराशापमुक्ति स्यां तादृक्शापवती विभो ।
अहमेषा प्रार्थना मे प्रणतप्रिय शंकर ॥

इति तया विरचितानि प्रार्थनावचनानि अनुभूता च तस्या निष्पापता स्वान्तस्य । अनन्तरं च प्रतिलतामण्डपं प्रस्थितां तां स मुनिराजो वत्से निर्व्य-

लीकेनामुना ते भक्तिभरेण परितुष्टं मे स्वान्तं तद्वृणीष्व यथाभिलषितान्कामानित्यब्रवीत् । घनाघनगर्जितेन मयूरीव तद्वचसा संप्राप्तपरमप्रमोदा सा प्रणम्य भगवन् न मया कापि भगवतो भक्तिर्विरचिता । केवलमपराधपरंपरैव प्रतिक्षणं रचिताऽस्ति तथाऽपि न मे पूर्वापराधान्विलोक्येदानींतनया स्वल्पयाऽपि भक्त्या सन्तुष्यसि सेयं महत्ता ते परापराधप्रेक्षणपराङ्मुखी परगुणपरमाणुपर्वतीकरणपट्वी च महतां चेतोवृत्तिरथवाऽद्भुतान्येव महतां चरितानि । तथा हि । महतां प्रकृतिराकृतिः कृतिः काप्यद्भुतैव । ते ह्यपकारिणोप्युपकुर्वन्ति ते हि दुःखदानपि सुखयन्ति ते हि शत्रुष्वपि मित्रवद्वर्तन्ते च । किंबहुना महान्त इव महान्त एव नान्ये । मन्ये भवादृशामेव महात्मनामनुग्रहेण जगत्स्वास्थ्यमनुभवतीत्यादीनि सप्रणामं सार्जवं च बहूनि प्रार्थनावचनानि जगाद । श्रुत्वा च तानि वत्से शृङ्गारमञ्जरि मृदुभाषितया सरलतया सुशीलतया विश्वहितेच्छुतया च ते संप्राप्तस्वान्तपरितोषोऽहं तन्निःशङ्कमभिधीयतां किं ते वरमभिददामीति । पुनरपि दयापीयूषपयोदे नदति महामुनीन्द्रे सा भगवन् ! भगवत्कृपावलोकनमेव मे परमो वरस्तथापि यदि भगवन्मनस्याग्रहो वरं दातुं तर्हि यन्मयेदानीमेव प्रार्थितं भक्तवत्सलाद्भगवतो महेश्वरात्तदेव पूरयतु मन्मनोभिलषितमत्रभवानित्युक्त्वा शृङ्गारमञ्जरी गिरमुपसंजहार । तत उग्रतपाः पुत्रि त्वया परमशिवस्याग्रे त्रयो वराः प्रार्थितास्तत्र प्रथमेन तृतीयेन च वरप्रार्थनेनागण्यपुण्यवर्ण्यया त्वयात्मनः परहितेच्छुता परार्थ एव स्वार्थबुद्धिता कृतज्ञता च प्रकाशिता । परं द्वितीयस्मिन् वरे ममोपकारिणः सन्तु राजानः सुखिनः सदा इति प्रार्थितं तदतिदुःसंभवमिव प्रतिभाति यतो जानास्येव भवती परद्रोहिणां पुण्यानि यशांसि तेजांसि श्रियो धियः कीर्तयः कान्तयश्च पराहितैषितापिशाचीभीता इव सद्यः प्रपलायन्ते । न परद्रोहसमं जगत्यस्मिन्महापापं न परद्रोहसमः परः

परमेश्वरापराधो न परद्रोहसमोऽन्य आत्मद्रोहश्च । यथा यथा परद्रोहिणोऽपरेभ्यो द्रुह्यन्ते तथा तथा स्वयमेव स्वावरोपितपरद्रोहहलाहलाचलारुहफलनिकरानिव पराभवाननुभवन्ति । न परद्रोहिण ऐहिकानि सुखानि नामुष्मिकाणि सुखानि कदाचिदप्यनुभवन्तीति । विचार्यमत्र वत्सया तैर्नृपैः कीदृशं मदीयमहितमीहितं कीदृशमाचरितं कीदृशं कारितं च । तादृशपरापकारिणो भवत्या उपकारिणो राजानः कथं सदा सुखिनो भवेयुरिति । किंच ते सांप्रतं प्रनष्टप्राणाः स्वदुष्कृतपरिणामायमाना नानानिरययातना अनुदिनमनुभवन्ति । ते च कदा ततो मुक्ता भविष्यन्तीति न वेद्म्यहम् । तत्कथमहं राजानः सुखिनः सन्तु तवोपकारिण इति वरं दातुं प्रभवेयं चेत्यपि विचार्यं । वज्रपातप्रतिममेतन्मुनिवचनमाकर्ण्यैव हा हंत किं ममोपकारिणो राजानः प्रणष्टप्राणाः पापफलानि नरकदुःखान्यनुभवन्ति । हा धिङ्मां मन्दभागिनीं निष्प्रयोजनमिदानीं मे जीवनम् । अयि कृपापीयूषपारावार मुनिमहेन्द्र ! यद्यपि युष्माकमहितमीहितमस्माभिर्भूयोभूयोनुभवमाचरितं च तथापि स्वीयां महत्तां महाशयतां दयालुतां च विचार्यास्माकं हितमेवाचरिष्यति भगवानित्यद्धा परमवैमि । इत्येतान्यक्षराणि वदन्ती मूर्च्छया महीतले न्यपतत् । तस्याः कृतज्ञतया भक्त्या प्रणयेन च संजातदयोदयो मुनिः कमण्डलुजलसेकेन कदलीदलजलार्द्रापवनैश्च शनैः शनैरपनीतमूर्च्छामकरोत्ताम् । प्राप्तसंज्ञा च सा ससंभ्रममुत्थाय भगवन् पापाया मन्दभाग्याया ममकृते महान् श्रमः स्वीकृतो भगवता । यद्यपि महदुपकृतं मयि मूर्च्छामपनीयार्येण तथापि मम परमोपकारिणां राज्ञां प्राणतुल्ययोश्च मे प्रियसख्योर्वियोगेन जीवितान्मरणमपि प्रियं मे । तत्पुनः शापप्रदानेन मामपि मत्सखीमिव शिलामयीं करोतु भगवानिति वदन्ती मुनिवरचरणकमलमश्रुसलिलैः प्रणामप्रणम्रा क्षालयामास । संजातकरुणश्च तैस्तैस्तस्या वचनैः क्षणं विचिन्त्य पुत्रि दुः-

सहास्वप्यापत्सु धैर्यमेव धार्यं धीधनैरिति शास्त्रसिद्धं तथापि मृदुलमृदुलान्तःकरणतया न त्वं तानि तानि प्रियजनवियोगदुःखानि सोढुं क्षमा तन्निःसंज्ञैव ते त्वत्प्रियसख्योराशापक्षयं क्षेमंकरीति विचार्य वच्मि नीलमणिमयालंकारैर्नीलमणिमयमिवाखिलमिमं प्रदेशं प्रदर्शयन्ती नीलमणिमयी शालभञ्जिका भवतु भवती। प्रदेशोऽप्यशेष एव इन्द्रनीलमणिमय एव भविता। किंच यः कश्चिदपरोऽप्यत्रायास्यति सोप्यासायमत्र तिष्ठन् नीलमणिमयो भविष्यति। ततश्च प्रथमं तवैव प्राणप्रियोऽस्मिन् स्थले समागत्य सायंसमये नीलमणिमयतामुपैष्यति तदा त्वं शापमुक्ता पुनर्देवकन्या भविष्यसि। लावण्यलतिकायाः प्राणप्रियो यदात्रागत्य नीलमणितामुपैष्यति तदा लावण्यलतिका शापमुक्ता पुनर्दिव्यतामुपैष्यति। कह्लारकलिकायाश्च प्राणप्रियो यदात्रागत्य नीलमणिमयो भविष्यति तदा कह्लारकलिका शापमुक्ता पुनर्देवकन्यात्वमनुभविष्यतीत्यब्रवीत्स तपस्वी। श्रुत्वा चैतद्दीर्घमुष्णं च निःश्वस्य शृङ्गारमञ्जरी भगवन् भगवदुपदिष्टः शापान्तसमयोऽस्माकं मन्दभाग्यात्पुनर्दुःखरूप एव जातो यतः संसारसर्वस्वे हृदयसर्वस्वे प्राणसर्वस्वे च प्राणप्रिये नीलमणिमयतामुपगते शापमुक्त्याऽपि किं फलं मे। तथैव कह्लारकलिकालावण्यलतिकयोरपि तादृशी शापमुक्तिर्दुःखदैव न सुखदा। वरं ततो मणिमयत्वमेव यावत्प्राणप्रियशापमोक्षमस्माकम्। चिरेणापि सर्वे सहैव वयं शापमुक्ता विधेया इति भवदाज्ञाविधेयस्यास्य जनस्य प्रार्थनेति शोकाश्रुगद्गदां गिरमगिरत्। उग्रतपास्तु क्षणं विचार्याब्रवीद्वत्से तवेयमवितथैवोक्तिः परं नाविदितं वत्साया जगदखिलमिदं दैवतन्त्रमिति। विना दैवाज्ञया किं केनापि किमपि कर्तुं शक्यते। देवानां देवलोकाद्भूलोके पतनं दैवनिर्मितं राज्ञां राज्याच्च्यवनं दैवनिदानं युष्माकं मणिमयत्वप्राप्तिर्दैवनिमित्ता ममापि शापप्रदानेन तपोव्ययोऽयं दैवेच्छामूल एव। न दैवकृत्यानि कोऽपि ज्ञातुं परिहातुमन्यथा विधातुं

वा प्रभवति । कस्यापि हितार्थमहितार्थमेकमप्यक्षरं वक्तुं विना दैवेच्छां कः शक्नुयात् । पुत्रि विचित्रमेव किमपि दैवविलसितम् । न देवा न दानवा न मानवा न यक्षा न राक्षसा न विद्याधरा न गन्धर्वा न भूता न पिशाचा वा दैवं वशीकर्तुं प्रभवन्ति प्रत्युत दैवमेव तान्सर्वान्वशीकरोति । तादृशासी-ममहिममहितं दैवं किमस्तीति चेन्न किंचिदन्यत् केवलं स्वकीयपूर्वजनुःकृतं शुभमशुभं वा कर्मैव दुर्लंघ्यं दैवं भवति । ततो विचार्यैव कर्माणि कर्तव्यानि यत्परिणामः शुभोदर्क एव स्यात् । मया यत्किमप्युक्तं न तत्किंचिदन्यथा भविष्यति तथापि प्रयतिष्ये भवत्या निर्मलया भक्त्या परितुष्टो युष्माकं श्रेयसे तदिदानीं तु नीलमणिमयतामालम्बस्वेति प्रोक्ते भगवन् यथाज्ञा भगवतो यु-ष्मत्कृपायत्तं हि नः श्रेयः किंबहुना सोऽयं चरमो मे प्रणाम इति वदन्ती नीलमणिमयतामगच्छत् । ततस्तदाश्रयभूतायां मणिशिलायाम्

**श्रेयः स्वमिच्छता स्थेयं नेह केनापि कर्हिचित् ।**
**यस्तु स्थास्यति चासायमिन्द्रनीलो भविष्यति ॥**

इति संलिख्य स तपस्वी ततो यथाभिलषितं दिगन्तरमयासीत् ।

वामदेव नाविदितं ते यत् यानि यानि फलानि दुष्कृतकारिभिरनुभूयन्ते तादृशानि ततोप्यधिकानि वा दुष्कृतप्रेरकैरप्यनुभूयन्ते इति । उग्रतपस-स्तपोभङ्गप्रवृत्ता अप्सरसो यथा स्वदुष्कृतेन मणिमयतामुपगतास्तथा तत्प्रे-रका राजानोप्यामुष्मिकव्याधिव्यथाविह्वला यमनिलयातिथयो भूत्वा ततोऽप्य-धिका निरययातना अनुबभूवुः । स्वस्वामिसुखेन सुखिभिः स्वामिदुःखेन दुःखिभिः स्वामिप्रियहिताचरणप्रबुद्धबुद्धिभिः स्वामिसद्गुणगाने वाचालैः स्वामिनिन्दायां मूकैः स्वामिकलत्रेषु मातृबुद्धिभिः स्वामिपुत्रीषु स्वसृशेमुषीभिः स्वामिसेवासर्वस्वैः किं बहुना प्राणार्पणैरपि स्वामिश्रेय आचरद्भिर्भाव्यं भव्य-कुलसंभवैः सेवकैरित्यैहिकामुष्मिकश्रेयस्करं शास्त्रोक्तं सत्सेवकधर्ममनादृत्य

कृतघ्नास्तत्सेवकास्तु निर्नायकं तद्बलं विलोक्य वस्त्रालंकारधनादिकं गृहीत्वा यथाभिलषितानि दिगन्तराणि पृथक् पृथक् प्रययुः । न तेषां मध्यात्कोपि राजप्रवृत्तिनिवेदनाय राजधानीं प्रत्यगच्छत् । अङ्गवङ्गकलिङ्गेषु स्वस्वनरेन्द्राणां चिरेणापि कामपि प्रवृत्तिमनुपलभ्य तद्धर्मपत्न्यस्तत्पुत्रास्तदामात्यास्तन्मन्त्रिणस्तत्सामन्तास्तत्प्रजाश्च तेषां प्रवृत्त्युपलब्धये सर्वासु दिक्षु पृथक् पृथक् दूतान्विसर्जयामासुः । प्रतितीर्थं प्रतिक्षेत्रं प्रतिनगं प्रतिनगरं प्रत्यारामं प्रत्याश्रमं प्रतिपुण्यारण्यं चान्विष्यान्विष्य कुतोप्यप्राप्तप्रवृत्तिलवसारेषु चारेषु प्रतिनिवृत्तेषु परमौदास्यनिमग्नमानसाः किंकर्तव्यतामूढाः सर्वेऽमात्यादय आसन् । आसीदङ्गदेशेश्वरस्य वीरसेनस्य सत्कुलसंभवा पतिव्रता शैब्या नाम धर्मपत्नी । वङ्गदेशेश्वरस्य राजसिंहस्य च सत्कुलसंभवा पतिव्रता मालवीनाम धर्मपत्नी । कलिङ्गाधीशस्य चित्रसेनस्य तु नासीत्काचित्कुलीना धर्मपत्नी । सत्कुलसंभवा पातिव्रत्यपरायणा च धर्मपत्नी कुलभूषणं कुलाधारः कुलदैवतं च भवति । न सा कदाचित्स्वप्राणप्रियप्रेमादिना मदान्धतामवलम्बते न सा कदाचित्स्वप्राणप्रियाप्रेमापमानादिना क्रोधान्धतां धत्ते न सा कदाचित्स्वप्राणप्रियारुचिकरं वचो वदति न सा कदाचित्स्वप्राणप्रियारुचिकरं किमप्याचरति न च सा कदाचित्स्वप्नेपि स्वप्रियस्याप्रियमहितं च चिन्तयति । कुलीनश्वश्रूं मातृवत् परिचरति कुलीना श्वशुरं पितृवत्परिचरति कुलीना प्राणप्रियं परमेश्वरवत्परिचरति । स्वपतिसुखेन सुखिता स्वपतिदुःखेन दुःखिता च सा स्वपतिहितमेव वाञ्छति स्वपतिहितमेव प्राणार्पणेनापि करोति परमेश्वरादपि स्वपतिश्रेयएव प्रार्थयते । सुकुलसंभवाया धर्मपत्न्या ईदृशैर्गुणैरेव विक्रीतस्वान्ता इवाराजरङ्कं कुलीनामेव कामिनीं कामयन्ते कुलीनाः । अगण्यलावण्याप्यगण्यगुणगणाप्यकुलीना न साधारणलावण्ययाऽपि साधारणगुणयाऽपि कुलीनया कदाचिदपि तुलनामुपैति । कुलीना कामिनी तु कदाचिदपारविपत्पारावारेऽप्यात्मपातिव्रत्यप्रभा-

वेण पारदा भवत्यात्मकुलस्येति के न जानन्ति । तादृगशेषगुणरत्नराजिताऽप्रतिमपातिव्रत्योत्तमोत्तमकुलसंभवा वीरसेनस्य धर्मपत्नी शैब्या राजसिंहस्य धर्मपत्नी मालती च स्वपतिप्रवृत्तिमनुपलभ्य परमं विषादमापन्ने न दिवा न रात्रौ नाहारे न विहारे नान्तर्न बहिः क्वापि किमपि शर्म लेभाते । प्रथमं पतिप्रवासादेव दुर्बलाङ्गे विवर्णे मलिनाम्बरे चाभूताम् । तत्रापि प्राणप्रियविषयकसंदेशलवस्याप्यलाभादयनीयदशे शून्यचित्ते निरुत्साहक्लेशे च बभूवतुः । निष्फलेषु सकलेषु स्वपतिसमन्वेषणप्रयासेषु शैब्या सांप्रतं परमेश्वरचरणाश्रयणमेव शरणं नान्यदिति विचिन्त्य प्रियसखि मालवि बालभावादेवारभ्याहमस्मि त्वदीया प्रियंसखी त्वं चासि मदीया प्रियसखी । त्वदीयसुखदुःखसमभागभोगिन्यहमस्मि मदीयसुखदुःखसमभागभोगिनी च त्वमसि । मनसा वचसा कर्मणा चाहं त्वदीयं श्रेय इच्छामि त्वं च मदीयं श्रेय इच्छसि । जानात्येव भवती यदपरिमितया तया सेनया सह मम प्राणेश्वरस्तव प्राणेश्वरस्तयोर्मित्रं चित्रसेनश्च क्व गता इति नाद्यापि काचित्प्रवृत्तिरुपलब्धा । श्रान्ताः सर्वेऽमात्या मन्त्रिणः सामन्ताः प्रजाश्च तदन्वेषणप्रयासेन । समन्विष्टानि परित आसमुद्रं सर्वाणि दिगन्तराणि गिरयो गिरिदर्यो वनान्युपवनानि तीर्थानि क्षेत्राणि पुण्याश्रमाश्च न परं किंचित्तद्वाचिकमुपलब्धम् । तदिदानीं विना परमेश्वरं नेतरः कश्चिच्छरणं नौ । तत्प्रसादसंपादनसाधनं तु धर्मकर्मैवेति । तच्च धर्मकर्म सहैवावाभ्यां विचार्य विचार्य विधेयमत एतत्पत्रिकाप्राप्त्युत्तरक्षण एवात्रागमनाय प्रस्थानमुहूर्ततां नेयः । यतः

नानादुःखशतान्धानां किंकर्तव्यजडात्मनाम् ।
अकुण्ठप्रसरं चक्षुः प्रिये प्रियसमागमः ॥

इति पत्रिकां लिखित्वा मालवींप्रति प्रेषयामास । अथ विदितपत्रिकाभिप्राया मालवी शैब्यालेखानुसारेणाङ्गदेशं गन्तुमात्मराजधानीतः पत्रिकाप्राप्ति-

वासर एव प्रस्थाय राजकीयसकलकार्यव्यवस्थां विधातुं नगरान्नातिदूरे प्रमदवने दिनत्रयं निवासं कल्पयामास । अङ्गदेशंप्रति गन्तुं प्रमदवनकृतनिवासां मालवीं श्रुत्वा सर्वाप्यावालवृद्धा वङ्गदेशप्रजा तं प्रमदवनं परिवव्रे । परेद्युर्मालवी वृद्धान् प्रधानानाहूयैवमभाणीत् । अयि आर्य मन्त्रगुप्त आर्य कीर्तिवर्मन् आर्य बुद्धिसागर आर्य सत्यशील, सर्वेऽप्यत्रभवन्तो भवन्तः सर्वस्याप्यस्य वङ्गदेशस्याधारभूता जंगमा मानवाकृतयो महास्तम्भा इव विलसन्ति । पितृतुल्यदयालुनिजनरपालविश्लेषव्याकुलायाश्चास्याः प्रजाया विश्वासस्थानं च यूयमेव । न केवलं राज्यप्रधानान् मदीयार्यश्वशुरसमयप्रधानतया श्वशुरसमानमानानेव मन्येऽहं युष्मान् । तदेतत्पृच्छामि यदियं सकलाऽपि प्रजा दिवसत्रयादारभ्य परित्यक्तान्यव्यापारा परिव्रज्य प्रमदवनमुदासीनाऽत्रैव निवसति । मातृवियोगे स्तनंधयस्येव मद्वियोगेनास्या असह्यं दुःखं भवतीति तस्या अविरलगलदश्रुजलानि लोलानि लोचनानि निर्विश्रामनिःसरन्निःश्वासपरंपरा विवर्णा अधरपल्लवा असह्यविषादनिवेदिशव्दवत्यो निर्वेदवाचः शून्यानि हृदयानि प्रोषितानन्दहास्यलास्यान्यास्यानि च निवेदयन्ति । तथैव ममापि वत्सस्य चन्द्रहासस्य वियोगे यादृशं दुःखं भवेत्ततोप्यधिकं तस्या भाविना वियोगेन दुःखं भवति । तद्यदि युष्माकमाज्ञा तर्हि स्वयमेवाहं तां समाहूय समाश्वास्य च गच्छामीति निवेद्य विरतायां मालव्यां सर्वानुमतेन मन्त्रगुप्तो नाम प्रधान उत्थाय बद्धाञ्जलिर्विज्ञापयामास । मातर्मालवि कामं वृद्धा अपि वयं देव्या बालका एव राजपत्नीत्वाद्राजमातृत्वाच्च देवी सर्वस्या अस्याः प्रजाया मातैवासि । ततः सुखं समाहूय समाश्वासयतु तां देवी । देव्या दर्शनेन समाश्वासनेन च चिरविप्रयुक्तमहाराजविरहविह्वला सा परमं संतोषं परमां शान्तिं चोपैष्यति । देवि उत्तमोत्तमेनामुनात्मविचारेण महाराजस्य राजसिंहस्यार्धाङ्गरूपतात्मनो विशदीकृता देव्येति । विरतवचसि च तस्मिन् प्रतीहार ! प्रम-

दवनमेतत्परिवृत्य स्थितेभ्यः सर्वेभ्यो जनेभ्यो ब्रूहि सर्वैरपि भवद्भिर्मध्याह्नोत्तरं प्रमदवनान्तर्गतो माधवीमण्डपः संभूषणीय इति । यथाज्ञा देव्या इत्युक्त्वा गते प्रतीहारे आर्या भवद्भिरपि प्रथममेवागत्य सनाथः कर्तव्यो माधवीमण्डप इत्युक्ते देवि यथाज्ञा देव्या इत्युक्त्वा प्रयाणप्रणामप्रणतान्प्रधानान् विसर्ज्य स्वयमपि शिवपूजनादिनिजव्यापारपरायणान्तःकरणा संबभूव । अथ गगनमध्यमलंकृत्य पश्चिमाशां प्रत्यवतरति भगवत्यशेषभुवनभूषणे दिनमणौ ससंभ्रमं समागतयाऽखिलया प्रजया मन्त्रिभिः सामन्तैरमात्यैश्च संकीर्णे माधवीमण्डपेऽपसारितजवनिकायाः सुवर्णशिबिकायाः सपुत्ररत्ना समुत्तीर्य कमलकोशकोमलाभ्यां पद्भ्यां चलन्ती पुरःसराभ्यां मन्त्रगुप्तकीर्तिवर्मभ्यां पृष्ठतः संचलद्भ्यां च बुद्धिसागरसत्यशीलाभ्यां प्रधानाभ्यां शोभमाना चतुर्भिरुपायैरुपास्यमाना सनया च मूर्ता राजलक्ष्मीरिव मालवी माधवीमण्डपं प्रविवेश । दृष्ट्वैव तां सर्वेऽपि ससंभ्रमं समुत्थाय समौक्तिकसुवर्णपुष्पाक्षतां पुष्पवृष्टिं विधाय सानन्दाश्रुलोचना प्रणयप्रणम्रशिरसः परमया भक्त्या प्रणेमुः । पश्य पुत्र भवत्पित्रा पुत्रनिर्विशेषप्रेम्णा पालितां रूपान्तरामिव कामदुघां ते प्रजामिति क्रमशः सर्वान्पुत्राय दर्शयन्ती स्वयं च दयार्द्रया दृशा पश्यन्ती शनै शनैरतिक्रम्यातिसंकीर्णं सभामार्गं सुवर्णसिंहासनं पुत्रेण सह समारुरोह । अनन्तरं च यथास्थानं स्थितेषु सर्वेषु सभ्येषु समुत्थाय मन्त्रगुप्तः सभ्याः दयार्द्रहृदया देवी मालवी पुत्राधिकप्रिया मे प्रजा किं विज्ञापयितुमागतास्तीति श्रोतुमातुरतरं मे मनस्तद्विज्ञाप्यतां विज्ञाप्यमिति मन्मुखेनाज्ञापयतीत्यवोचत् । मन्त्रगुप्तवचनविरामे च सर्वप्रजानुमतेनोत्थाय बुद्धिसागरो विरचय्य करकमलसंपुटं दयार्द्रहृदये मातर्मालवि सकलेयं प्रजा मन्मुखेन यत्प्रार्थयितुमिच्छति तन्निवेद्यते मया देव्यै । नाविदितं ह्येतद्देव्या यद्राजा हि प्रजानां पिता दैवतं सर्वस्वं चेति । राजार्हसकलसद्गुणरत्नरत्नाकरो महाराजो राजसिंहः सह सेनया सह मित्रैश्च न जा-

नीमहे क्व विलीन इति । तन्निमित्तं यद्दुःखं यो विषादो या च चिन्ता जायते सा काप्यवर्ण्यास्तीति केषामविदितम् । महाराजान्वेषणाय सर्वैरप्यस्माभिः प्रयत्नपरंपरा निर्विरामं विधीयन्ते परं न कस्यापि कोप्यद्यावधि प्रयत्नः फलोन्मुखो दृश्यते । तेनातिचिन्तातुराणामस्माकं क्षते क्षार इव देवी प्रयास्यत्यङ्गदेशं स्थास्यति च तत्रैव यावन्महाजागमनमिति किंवदन्ती श्रवणपरंपरागता व्यथयति हृदयमर्माणि । यद्यवितथेयं किंवदन्ती तर्हि फलिताः पापपादपा दुर्दशादुर्लता मन्दभाग्यकटुकन्दाश्च नः । विचार्यमेतद्देव्यैव महाराजेन देव्या च परित्यक्तानामस्माकं कोऽपरो लालनपालनपोषणानि करिष्यतीति । महाराजार्धाङ्गरूपाया देव्या महाराजप्रजास्वस्मासु या कृपा या वत्सलता या ममता चास्ति न सा कस्याप्यन्यस्य कदाचिदपि भविष्यतीति निःशङ्कं जानीमहे । यदि देव्याः शैब्यायाः सौहार्दानुरोधेनावश्यमनुग्राह्यैवाङ्गदेशराजधानीति देव्या आशयस्तर्हि न वयं निवारयामः । किंतु मातापितृवियुक्तबालकनिर्विशेषां दशामनुभवन्त्यनाथाऽत्मनः प्रजेयं पुनः सत्वरतरं समागत्य सकुमारया भगवत्या सनाथा विधेयेति प्रार्थयामहे । बुद्धिसागरस्योक्तिमाकर्ण्य मालवी दीर्घमुष्णं निःश्वस्य चैलाञ्चलेन गलदश्रुजालं लोचनयुगलं प्रमृज्य सिंहासनादवतीर्य च प्राब्रवीत् ।

अयि पूर्णपुण्यलभ्याः सभ्याः ! निर्व्यलीकराजभक्तिभरधुरंधरयाऽनया मे प्रजया मत्प्राणप्रिये मयि च या ममता या प्रीतिर्या भक्तिश्च प्रदर्शिता तेनापारोपकारभारवत्यस्म्यहं तस्याः । सा खलु मे चन्द्रहासस्य रूपान्तरम् । यत् यादृशं यावच्च दुःखं भाविना मद्विरहेण युष्माकं हृदये भवति तत्तादृशं तावच्च दुःखं भाविना युष्मद्विरहेण ममापि हृदये भवत्येव । तथापि सह शैब्यया विचार्य महाराजप्राप्तिकराणि कान्यपि सत्कृत्यानि कर्तुमेवाङ्गराजराजधानीं गन्तुमिच्छामि । प्रथमं तु चन्द्रहासेन सहैव गन्तव्यमित्यासीन्मे मनसि परं

विलोक्य युष्मद्दशां युष्मत्संभावनायां वत्सं चन्द्रहासं प्रजानुरञ्जनचतुरान् चतुरोऽमूनमात्यांश्च नियुज्य गमिष्यामि । न वत्सश्चन्द्रहासोमी प्रधानाश्च कदाचिदपि मे प्रजामुद्वेजयिष्यन्तीत्याशासे । किंच यावन्महाराजागमनमेव मे तत्र स्थितिर्भविष्यति परं न तेनौदास्यमालम्ब्यम् । किंतु तथा तथा भक्तजनभद्रंकरः श्रीशंकरो भवद्भिः प्रार्थनीयो यथा सद्य एव कृपया महाराजसमागमसुखमर्पयेत् । यथाशास्त्रप्रजाधर्मानुसरणधुरीणां युष्माकं मनोवाक्कर्मवृत्तिं विलोक्य संप्राप्तस्वान्तसंतोषाऽहं पूरयतु वः पराः सकलाभिलाषपरंपराः परमेश्वर इति प्रार्थयामि परमेण प्रेम्णा परमेश्वरम् ।

इति प्रजां प्रत्युक्त्वा वत्स चन्द्रहास आर्या प्रधानाश्च नाविदितं खलु युष्माकं राजानो हि धरया कलत्रवन्तः प्रजया पुत्रवन्तश्च भवन्तीति । अक्षरद्वयघटितस्यापि राज्यशब्दस्यार्थगाम्भीर्यं किमप्यद्भुतमेव वर्वर्ति परं राज्यशब्दार्थज्ञानात्पूर्वं राजशब्दार्थ एव ज्ञातव्यः । न चित्रैश्छत्रैर्न चन्द्रगौरैश्चामरैर्न काञ्चनैरासनैर्न हरिकरिनरनौकाद्यैर्वाहनैर्नामूल्यमणिमञ्जुलैरलङ्कारैर्न सुवर्णपूर्णैः कोशैश्च नरो नरेश्वरापरपर्यायराजपदभाजनतां गच्छति । नैतानि खल्वसाधारणानि राज्यचिह्नानि । असाधारणेन प्रजानुरञ्जनरूपेणैव राजचिह्नेन राजितो जनो राजपदस्य राज्यपदस्य च पात्रतामधिगच्छति । प्रजानुरञ्जनरूपं यद्राजकार्यं तद्राज्यपदवाच्यतां गच्छति । तच्चास्माकं राज्यमेतद्यावत्त्वदीयतातचरणागमनं त्वदायत्तमेवास्ति तद्धिषणाबलनिर्जितधिषणानाममीषां वृद्धप्रधानानामनुमत्या सर्वाया अपि प्रजाया मनसा वचसा कर्मणा चानुरञ्जनमनुदिनमनुक्षणं च विधेयं वत्सेन । पूर्णेन प्रेम्णा पालिता लालिता पोषिता च निजा प्रजैव राज्ञां कामधेनुश्चिन्तामणिः कल्पलता चेति निःशङ्कमवगन्तव्यम् । विस्तीर्णेऽस्मिन्महीमण्डले महीमहेला महेलावलोकहेलावलोपितविवेका घनधनसंपादनतृष्णातिरेकात् केचन धातुविद्याविशारदानेव विचिन्वन्ति केचन

स्पर्शमणीनेव मृगयन्ति केचन दक्षिणावर्तान् शङ्खानेवान्वेषयन्ति केचन राज्यपदप्रदप्रभावां हिमाउसंज्ञपक्षिपक्षच्छायां च वाञ्छन्ति सोऽयं सर्वेषां तेषां महान् मनोव्यामोह एव । विना प्रजानुरञ्जनं न धातुविद्याविशारदा न स्पर्शमणयो न दक्षिणावर्तशङ्खा न हिमाउसंज्ञपक्षिपक्षच्छायाश्च कामपि संपदं संपादयितुं प्रभवन्ति । प्रजैकवत्सवत्सला रत्नगर्भा कामदुघेयं तेषामेव नरेश्वराणां मनोभिलषितान् सर्वान् कामान् दुग्धे ये प्रतिदिनं परमेण प्रेम्णा प्रजावत्सं प्रीणयन्तीति केषामविदितम् । वत्स सांप्रतमिदानीमेतत्प्रजापारिजातोपवनं यावन्महाराजागमनं तुभ्यं समर्प्यते ततस्तथातथा तद्रक्षणे त्वया प्रयतितव्यं न यथैतत् दुर्धरतरकरसहस्रकरसंतापो म्लानतामुपनयेत् न यथैतत्तीव्रदण्डपवमानो व्याकुलतां गमयेत् न यथैतद्राजभयमहामयो नीरसतां प्रापयेत् न यथैतद्दुर्मन्त्रिकीटाः कृंतमूलं कुर्युर्न यथैतत्खलाधिकार्याखव उत्खनेयुर्न यथैतत्पिशुनजनवचनवनज्वलनज्वालाः प्रज्वालयेयुर्न च यथैतल्लता एतन्मञ्जरीरेतत्कुसुमान्येतद्दलान्येतत्फलानि च नीचनरवानरा अपहरेयुः । प्रजासुखैः सुखिभिः प्रजादुःखैर्दुःखिभिः प्रतिक्षणं च प्रजाप्रियहिताचरणपरायणान्तःकरणैश्च भाव्यं भव्यवंशसंभवैर्भूवल्लभैः अस्मत्प्रजान्तःपातिनि कस्मिंश्चिदपि जने दुर्दैवयोगाद्दुर्दशायोगाद्दुर्भाग्ययोगाच्च सति सापराधे तदपराधमुपेक्ष्यम् । न यथापुनस्तादृशमपरमपराधं कदाचिदपि स आचरेत्तथा प्रयतितव्यम् अनेकेऽविमृष्यकारितावारिधयो धराधिपतयोऽपराधिनि जने निर्दयतानिष्ठुरतरहृदयाः प्रचण्डदण्डप्रदानदर्शितपण्डिताडम्बरा भवन्ति स्वयं च तादृशापराधपरंपरा अविरतमाचरन्ति । किमिदं स्वौरसपुत्रनिर्विशेषीकृताखिलप्रजस्य राजधर्मस्योचितम् । महाराजविरहेण मद्विरहेण चोद्विग्नचित्ताया मे प्रजाया मा कदाचिदपि तादृशी दशा भवत्विति प्रार्थये परमेश्वरम् । वेद्म्येव यद्यप्यशंकं युष्मादृशवृद्धप्रधानोपसेवी वत्सश्चन्द्रहासो न केनापि प्रकारेण प्रजाया असंतोषं जनयिष्यति

किंतु सर्वथा संतोषमेव पोषयिष्यतीति । तथापि प्रजाया मम च स्वान्तसंतोषायैवैतद्ब्रवीमि । वत्स ! न यथेयं प्रजा त्वत्त औदास्यमुपगच्छेत् न यथोद्वेगमुद्वहेत् न यथा भयमाश्रयेत् न यथा त्वां निन्देत् न यथा त्वामुपेक्षेत न यथा त्वामुपहसेत् न च यथा मनसाप्यसंतोषमुपगच्छेत्त्वयि तथा तथा त्वया पवित्राया अस्याः प्रियाणि हितानि चाचरणीयानि । किंचामी प्रवयसः प्रधाना अस्मदीयराज्यस्य जंगमा कीर्तिस्तम्भा अक्षयाः कोशा अनर्घ्याणि रत्नानि च सन्ति ततः सर्वाणि कार्याणि तेषां संमत्यैव विधेयानि । वृद्धोपसेवा हि कापि कल्पलतेति विदितमेव वत्सस्य । अभिनवयौवनमहान्धतया केचन राजकुमाराः स्वप्रतिच्छन्दकवन्मिथ्याप्रियभाषिभिः सेवकैः सेव्यमाना वृद्धेषु दृढबद्धारुचयो दृश्यन्ते परं ततस्त एव सकललोकारुचिपात्रतां दुष्कीर्तिपात्रतां परपराभवपात्रतां च गच्छन्ति न वृद्धाः । प्रवयोभिरमात्यरत्नैर्विहीनानां महीनानां किं राजनीतिज्ञानां किं राजरीतिज्ञानं किं राज्यहितज्ञानं किं के शत्रवः के मित्राणि क उदासीनाश्च सन्ति राज्यस्यास्येति ज्ञानं किं विवेकज्ञानं किं विनयज्ञानं किं सद्गुणज्ञानं किं पुरातनेतिहासज्ञानं च कदाचिदपि समुद्भवति नैवेति निर्विवादम् । अतएव सर्वत्र सर्वेषु कार्येषु विशेषतो राजकार्येषु प्रवयसोऽमात्या एव मूलं सर्वसिद्धेः । सद्भाग्यप्राबल्यादमी प्रवयसोमात्यास्ते राज्ये मणय इव प्रकाशन्ते ततस्तत्सेवालभ्यलाभे न प्रमादो विधेयः । अयि प्रधानाः प्रजाश्च यद्यपीश्वरकृपया वत्सश्चन्द्रहासो न कदाचिदपि युष्मत्स्वान्तासंतोषं जनयिष्यति तथापि यदि कदाचिद्बाल्यादभिनवयौवनमदाद्धनमदाद्राज्यमदाद्वा किंचिदपि युष्मत्स्वान्तासंतोषकरं किमप्याचरेत्तर्हि नालम्ब्यौदास्यं नाश्रित्योपेक्षां नावलम्ब्य च भिन्नभावं रहः समाहूय निष्कपटमनोवाक्कायकर्मभिर्भवद्भिस्तस्मै सदुपदेशः सप्रणयं प्रदेयः । नैतावदेव सति प्रसङ्गे तं समुपालब्धुमप्यधिकारिणो यूयम् । किं बहुना सर्वैरपि युष्माभिरैकमत्येन तथा वर्तितव्यं

यथा महाराजोऽत्रागत्य श्रुत्वा च युष्मद्वृत्तान्तं परमसंतोषं प्राप्नुयादिति मे विज्ञप्तिः। इत्युक्त्वा सिंहासनोपविष्टायां मालव्यां समुत्थाय चन्द्रहासः सप्रणयं प्राह। मातः! अतिपवित्राया राज्यभक्तिभरनम्रायाश्चास्याः प्रजाया मत्पितृचरणकृतपालनपरितोषो युष्मत्कृतपालनपरितोषश्च विना मत्तातचरणागमनं विना च युष्मदागमनं भवितुमशक्य एव तथाप्यहं यथायुष्मदाज्ञमप्रमादलवं च तथातथा वर्तिष्ये यथा यथा तस्याः स्वान्तानि सुप्रसन्नानि संप्राप्तसंतोषाणि च भविष्यन्ति। यतो भगवत्या अनुकम्पया मदीयमखिलं प्रजापालनरूपं धर्ममवैमि। सांप्रतं च श्रीमत्याः सदुपदेशवचनानि निशम्य प्रजैव मे सर्वस्वमिति मनसि मे निश्चयो जातस्ततो न मात्रा प्रजाविषयिणी काऽपि चिन्ता चेतसि विधेया। किंचास्मत्कुलक्रमागतेष्वमीष्वमात्येष्वपि पितृचरणनिर्विशेषभक्तिश्रद्धो भविष्यामि। किंबहुना युष्मदाशिश्चयेन पितृचरणानां पुण्यनिचयेन परमेश्वरप्रसादेन च सर्वथा तथैव वर्तिष्ये यथा पुनरागताया भवत्याः स्वान्तं संप्राप्तसंतोषमेव भविष्यतीति। ततः स्वसिंहासनमलंकृतवति कुमारे चन्द्रहासे समुत्थाय मन्त्रगुप्तो मधुरां गिरमगिरत्। दयार्द्राशये राजमातः सर्वं मे वक्तव्यं कुमारभाषणेन कृतार्थमेव तथापि किंचिद्विज्ञापयामि। अस्माभिराबाल्यादद्यावधि बहवोऽधीताः श्रुता विलोकिताश्च राजनीतिप्रबन्धाः परं देव्या यदिदानीमल्पाक्षरैः कुमारायोपदिष्टं तत्किमप्यन्यदेव राजनीतिरहस्यम्। गौर्गौःकामदुघेति लोकोक्तिर्न मृषा यतः सकलार्थिजनार्थितार्थार्पणप्रणयिनी सा दोग्धारं पात्रं चालोक्य तदुचितमेवार्थक्षीरं क्षरति। बहवो राजानो राजामात्या राजसामन्ताश्च राजनीतिप्रबन्धान् गुरुमुखाच्छृण्वन्ति विलोकयन्ति विचारयन्ति च तथापि देव्योक्तं प्रजाविषयकं राजनीतिप्रबन्धाभिप्रायं विरला एव विदन्ति। विदित्वा च तदनुसाराचरणवन्तस्त्वतिविरला एव। तन्मूलं तु येषां येषां यादृशान्यन्तःकरणानि तेषां तादृश एव राजनीत्यर्थः स्फुरतीति।

अयि मातः राजनीतिप्रबन्धावलोकनवार्ता तु दूरेऽस्तु। बहवः सन्ति तादृशा अपि राजकुमारा ये प्रजासर्वस्वहरणमेव राजनीतिनैपुण्यं गणयन्ति। शतशः सन्ति तादृशा अपि राजकुमारा ये परललनालपनावलोकनमेवात्मनः प्रावीण्यं मन्यन्ते। सहस्रशस्तादृशा अपि सन्ति राजकुमारा य आत्मप्रजापीडनमेवात्मनः प्रौढतां मन्यन्ते। न केवलं राजकुमारा एव कतिकति राजामात्या राजसामन्ता राजभृत्याश्च न तादृशा दृष्टा न दृश्यन्ते च ये स्वोदरंभरितामेव राजनीतिकौशल्यं कलयन्ति। कतिकति तादृशा अपि राजपुरुषा न श्रुता न श्रूयन्ते च ये क्रौर्यकौटिल्यकापट्यपाटवादीन् दुर्गुणानेव राजनीतिं मन्यन्ते। कतिकति तादृशा अपि राजपुरुषा नानुभूता नानुभूयन्ते च ये चोरजारपिशुनशिरोमणित्वमेव राजनीतितत्वं मन्यन्ते। तानि तानि नीचकृत्यानि कृत्वा कृत्वा च ये राजनीतिरहस्यविज्ञंमन्यतामुद्वहन्ति। नैतावदेव प्रज्ञाप्रतिपन्थिनां प्रथमे च ये नीचनीचाचरणमेव राज्याभ्युदयबीजमित्यविशङ्कं मन्यन्ते नान्तरेण नीचाचरणमितरद्राजप्रीतिराजमान्यताराज्यश्रीसंपत्संपादनसाधनमस्तीति परान् बोधयन्ति च। हा धिक् तान् धिक् तेषां दुर्बुद्धिं धिक् तेषां दुर्विचारान् धिक् तेषां दुर्जन्म धिक् तेषां दुर्जीवितं च। य एवमनर्थानप्यर्थानात्ममतिमान्द्यान्मत्वा स्वयं भ्रमन्ति बालबुद्धीन्परान् भ्रामयन्ति च दशाया दौर्बल्ययोगात् भाग्यानां मान्द्ययोगात्पुण्यानामपचययोगात्पापानामुपचययोगाच्च येषां सभासु तादृशा द्विपदा रासभाः प्रधानपदमधिगम्य खरतरैः शब्दैः सर्वानुद्वेजयेयुस्तुच्छाशया अपुच्छा वानरा नराधिपतिप्रीतिपात्रतामवलम्ब्य परितः परिभ्रमेयुश्च ते राजाधिराजा अपि कथं न रङ्करङ्कतामुपगच्छेयुस्ते विद्वद्वर्या अपि कथं न मूर्खगणगणनीयतामनुगच्छेयुस्ते चक्रवर्तिनोऽपि कथं न चक्रवर्तिप्रदभ्रष्टतामनुभवेयुः। किं बहुना महेन्द्रसभायामपि तादृशाः प्रधानास्तादृशा राजपुरुषाश्च भवेयुश्चेन्महेन्द्रोपि स्वल्पैरेवाहोभिर्महेन्द्रपदभ्रष्टतामनुभवे-

दिति मन्येहम् । देवि ! महाराजराजसिंहस्य प्रबलपुण्यप्रभावात्कुमारश्चन्द्रहासस्तु बाल्यादेवाखिलान् विद्वद्वरानपि पवित्रैः स्वचरित्रैर्विस्मयमयहृदयानकरोत् । सोयमद्याधीताखिलाध्येतव्यो ज्ञाताखिलज्ञातव्यश्चाश्चर्यानन्दनिमग्नमनसः समस्तानपि लोकान् कुर्यात्तत्र किं चित्रं यतः सद्गुणरत्नरत्नाकरान्महाराजाद्राजसिंहाल्लब्धजन्मा जनः सकलकलाकलापपूर्णो निखिलहृदयाह्लादकश्च भवेदिति जगत्प्रसिद्धमेव । प्रधानानां सदुपदेशानुसारेण वर्तितव्यमित्याज्ञाप्यते देव्या कुमारः परं देव्याः पुण्यप्रभावेण कुमार एव सति कार्यप्रसङ्गेऽस्मभ्यमपि सदुपदेशं दातुं शक्नोति ततः प्रजायाः किं भविष्यतीति चिन्ता न विधेया । किं च यथा चन्द्रहासो युष्मदाज्ञां शिरसा धारयति तथा वयमपि मनोवाक्कायकर्मभिः प्रजानुरञ्जनविषयिणीं युष्मदाज्ञां शिरसा वहाम इति । ततः स्वस्थानस्थिते प्रधानमण्डलमण्डनायमानसद्गुणे मन्त्रगुप्ते समुत्थाय प्रबद्धाञ्जलिर्बुद्धिसागरः सादरमब्रवीत् । राज्यभक्तिभरपूर्णान्तःकरणेयं प्रजा मन्मुखेन प्रार्थयति देवीम् । देवि ! देव्याः कुमारस्यार्यमन्त्रगुप्तस्य च भाषणैः परमं परितोषमुपगतानि नः स्वान्तानि । महाराज इव देवीव च कुमारश्चन्द्रहासोप्यार्यैरमीभिः सह प्रधानैरस्मत्पालनपोषणलालनानि करिष्यत्येव ततो नास्मद्विषयिणी कापि चिन्ता देव्या हृदये विधेया । सुखमनुगृह्यतां कतिपयदिवसावधि देव्याङ्गदेशोपि पुनः सहमहाराजेन दर्शनदानानुग्रहः कर्तव्यो निजायामस्यां प्रजायाम् । सफलाः सन्तु सकलायुष्मन्मनोभिलाषा इति प्रार्थयामहे महेश्वरमिति । बुद्धिसागरवचनविरामोत्तरक्षण एवोत्थाय देवी मालवी, वत्सस्य चन्द्रहासस्यार्याणां प्रधानानां भक्तिभरनम्रायाः प्रजायाश्च सद्वचनैर्निश्चिन्तचित्ताहमधुना प्रयातुमिच्छाम्यङ्गराजराजधानीं करोतु सर्वेषां वः कल्याणपरम्परां परमेश्वर इत्यवोचत् । मालवीवचनविराम एव समुत्थाय सर्वे पुष्पैस्तामवकीर्य प्रणयप्रणम्रशिरसः प्रणेमुः । मालवीं च सहकुमारेणोभयोः पार्श्वयोर्बद्धपङ्क्तिस्थित-

भक्तिनम्रां प्रजां स्नेहाश्रुपूर्णाभ्यां लोचनाभ्यां विलोकयन्ती प्रमदवनाद्बहिर्निष्क्रम्य कुमारस्य करं प्रवयसां मन्त्रगुप्तादीनां मन्त्रिणां करेषु समर्प्य वत्स ! विद्याविनयविवेकसंपन्नोसि तत्किमधिकं ते ब्रवीमि । यद्येतेषां प्रवयसां मन्त्रिणामाज्ञां नोल्लङ्घयिष्यसि करिष्यसि च भक्तिभरपूर्णायाः प्रजाया अस्याः पूर्णेन प्रेम्णानुरञ्जनं तर्हि न कदाचिदपि त्वां काप्यापत्पराभवपात्रतां नयिष्यति कलयिष्यति च ते कल्याणं कल्याणचिन्तामणिः श्रीचन्द्रचूडामणिः परमेश्वरप्रसादेन । किंचाहमपि स्वल्पैरेवाहोभिर्महाराजसमागममवाप्य पुनस्त्वन्मुखदर्शनसुखमनुभविष्यामीत्युक्त्वा नयनयुगलगलदश्रुसलिला नाधिकं वक्तुमशकत् । मातः सकलाश्रिन्ताः परित्यज्य सुखं प्रयाणं विधीयतां शिवाः सन्तु वः पन्थान इति गलदश्रुजलजालं चन्द्रहासेन प्रधानैश्च प्रोक्ते बहलपरिमललाभलोभभ्रमद्भ्रमरमालां पुष्पमालां ताम्बूलं च चन्द्रहासाय समर्प्य वत्स! भवत्पितृपितामहप्रपितामहपरिपालिता प्रजेयं पुत्रनिर्विशेषं परिपाल्येत्युक्त्वा रथमारुह्य प्रचलितुमारेभे । चन्द्राहासः प्रधानाः प्रजा च प्रणयविवशा मालवीरथमनुययुः । सुदूरमागताश्च ते देव्या मालव्यात्याग्रहेण प्रतिनिवर्तनायाज्ञप्तास्तरंगिणीतीरे वटविटपिच्छायायां यावद्रथदर्शनं यावद्रथध्वजदर्शनं यावद्रथरजोदर्शनं च तन्मार्गलग्नसाश्रुदृष्टयश्चित्रलिखिता इवावतस्थुः । धीरवीरधुरीणस्यापि कुमारस्य चन्द्रहासस्याभिनवमातृविश्लेषदुःखेन मनस्याविवेश किमप्यौदास्यं येन तस्य प्रावर्तन्तारुणारविन्ददर्पमोचनाभ्यां लोचनाभ्यामविरतमश्रुधारा शारदेन्दुसुन्दराद्वदनान्निःश्वासपरम्पराश्च । शून्यशून्यं हृदयं च न रमणीयेष्वपि वस्तुजातेषु प्रीतिं बबन्ध । विलोक्यैतत्सप्रधानमण्डलायां सकलायां प्रजायामौदास्योदधिनिमग्नायां सप्रणयं प्राब्रवीन्मन्त्रगुप्तः । अयि सभ्याः सत्कुलसंभवानां राजकुमाराणां सत्यसती वा दशा दैशिकायते सदाचारेषु सवर्षाम् । तथाहि । मातृचरणेषु सत्पुत्रैः कथं वर्तितव्यं कथं भक्तिर्विधेया कथं च तदाज्ञानुपालनं विधेयमिति कतिपयाहोरात्रमात्रभोग्योपि मातु-

र्वियोगे शून्यमिवाखिलं जगत्पश्यतोऽस्य कुमारस्य दीनदीना दशैवेयमुपदिशति नः सदाचारमिति । ततो मुहूर्तं तत्कथाप्रसङ्गेनैव तद्वियोगहरैर्मृदुभिर्वचनैः समाश्वास्य च राजकुमारं सह तेन सह प्रधानैः सह प्रजया च स्वां राजधानीमयासीन्मन्त्रगुप्तः । देवी मालव्यपि सत्पुत्रसत्प्रधानसत्प्रजावियोगदुःखान्यनुभवन्ती कतिपयैर्दिवसैराससादाङ्गराजराजधानीम् । अङ्गानामधिपस्य वीरसेनस्य धर्मपत्नी शैव्याऽपि श्रुत्वा समागतां स्वीयां प्रियसखीं मालवीं स्वयं पुत्रेण सहाभिमुखं गत्वा सादरं तामात्मनोन्तःपुरमानिनाय । अथ नानाप्रकारसत्कारविस्मृतमार्गश्रमायां मालव्यामेकदा कुमारं रुक्माङ्गदमाहूय शैब्या समीपासननिषण्णायां मालव्यां वाचमुवाच । वत्स ! तातचरणास्ते सहमित्राभ्यां राजसिंहचित्रसेनाभ्यां क गता इति नाद्यापि काचित्प्रवृत्तिरुपलब्धा । तत्प्रवृत्त्युपलब्धये रचिताः सहस्रशोऽपि प्रयत्ना निष्फलत्वमेवोपयाता इति नाविदितं ते । सद्धर्माचरणमेव सर्वापत्पारावारतरणे शरणमिति विचार्य तदाचरणाय प्रियसखी मे मालवी मयात्र समाहूता । सा च प्राज्यमप्यात्मराज्यमुत्सृज्य प्राणनिर्विशेषं कुमारं चन्द्रहासमपि परित्यज राजधानीमस्माकमलङ्करोति । तदिदानीं सुवर्णपूर्णान् राज्यकोशान् तुभ्यं समर्प्य त्वत्तातचरणैः पूर्णकृपया प्रदत्तैर्धनैः सद्धर्मकर्मकल्पद्रुमबीजान्येव वप्तुं त्वयाज्ञप्तमात्मानमिच्छामि । इत्युक्त्वा सकलाः कोशोद्घाटिनीस्तस्मै समर्पयामास । महाशयशिरोरत्नं रुक्माङ्गदोऽपि दयार्द्रहृदये मातः ! मयि राज्ये चास्मिन् परस्वधियं विधाय मत्तातचरणप्रसाददत्तैरेव धनैर्धर्मकर्माणि कर्तुमिच्छन्ति मातृचरणा एतावतैवेदानीं मन्दपुण्यं मन्दभाग्यमकृतार्थं चात्मानं मन्येहम् । सकलमपीदं साम्राज्यं निःशेषा अपीमे कोशा अशेषा अपीमेऽधिकारिणो निखिलमपीदं बलं किं बहुनायमपि जनः सपुत्रपौत्रपरिवारो मातृचरणाज्ञायत्त एवास्ति तन्मदीयतातचरणानां श्रेयसे तेषां सुखप्रवृत्त्युपलब्धये तद्वियोगजन्याप्रतिक्रि-

यापत्प्रतिक्रियायै वा सकलमपीदं राज्यं ब्राह्मणसात्कर्तुं तपस्विसात्कर्तुं देवालयसात्कर्तुं वा प्रभवत्यत्रभवत्या निर्मलतरा मनोवृत्तिः । निरवधीनप्यमून् निधीन् दीनानाथकृपणसात्कर्तुं स्वतन्त्रैव श्रीमत्या वाञ्छा । सपरिवारं मामपि तपस्विनां सेवायां महात्मनां परिचर्यायां वेदवेदाङ्गविदां विप्राणां वा सपर्यायां नियोक्तुमिच्छन्ति चेन्मातृचरणास्तर्हि तादृगाज्ञाक्षरश्रवणमात्रप्रतीक्ष एवायं जनस्तदतः परमस्मिन् राज्येऽमीषु कोशेष्वमीषु च राजपुरुषेषु न स्वप्नेपि परस्वता चिन्तनीया चेतसेत्युक्त्वाऽविरलगलदश्रुजलजालो मातृभक्तिभरविवशस्वान्ततया मौनमवलम्बमानः सकलाः कोशोद्घाटिनीः पुनः स्वमातृचरणसरसीरुहविन्यासशोभमाने स्फटिकमणिमये पादपीठे मुमोच । क्षणं मौनमवलम्ब्य पुनर्मातर्मालवि ! यादृशं यावच्चास्मिन् राज्येऽमीषु कोशेषु निदेशानुसारिणि मयि च जागर्ति स्वत्वं मातुर्मे शैब्यायास्तादृशं तावच्च स्वत्वं जरीजागर्त्यत्रभवत्या भवत्या अपीति निःशङ्कमवगन्तव्यम् । देशान्तरस्थं चन्द्रहासस्यैवेदं राज्यमिति मन्तव्यम् । किंचायमपि जनो रूपान्तरस्थश्चन्द्रहास एवास्तीति ज्ञातव्यम् । ततो मन्मात्रा श्रीमत्या च समारम्भणीयानि सद्यः श्रेयस्कराणि सद्धर्मकर्माणि । अहमपि युष्मदाज्ञावशंवदो नियोज्यो यथाभिमतेषु कार्येषु निःसंशयलवमित्युक्त्वा विरराम । श्रुत्वा चैतानि रुक्माङ्गदस्यातिमधुराणि मनोहराणि विनयभरभरितानि च वचनानि शैब्यामालव्यौ निर्विराममाविर्भवन्तीं हर्षाश्रुधारां चैलाञ्चलेन प्रमृज्य वत्स ! शोभन्ते त्वादृशां तादृशिवचनानि सत्पुत्राणां । सत्पुत्रधर्मोचितमखिलमिदमुक्तं वत्सेन । यद्यावां त्वादृशां सत्पुत्राणां द्रव्येषु परस्वतां मंस्यावहे तर्हि कस्यापरस्य द्रव्येष्वात्मस्वबुद्धिं धारयिष्यावः किमस्मिन्नसारेऽपारे च संसारेवतीर्णैर्मानवैर्विना परमेश्वरप्रसादेन विना पूर्वजानामाशिषा विना चागण्यैः पुण्यैर्भवादृशानि भूमितलभूषणायमानसद्गुणगणानि सत्पुत्ररत्नानि संप्राप्यन्ते नैवेति निर्विशङ्कम् । वत्स !

वत्सेन चन्द्रहासेन दीर्घायुष्मता भवता चोभे अप्यावां स्वंस्वमात्मानमात्मजद्वयवन्तमेव मन्यावहे प्रतिक्षणं प्रार्थयावहे च युवयोः श्रेयःपरम्परां परमकृपालुं परमेश्वरं प्रतीत्युक्त्वा तूर्ष्णीं बभूवतुः । प्रणयप्रणम्रो राजकुमारो रुक्माङ्गदोपि दयार्द्रहृदये मातरौ मे ! शुभकार्यसमारम्भेषु न विलम्बोऽवलम्बनीय इति लोकोक्तिर्न मृषेति नाविदितं वां तदतःपरमविलम्बितं समारभ्यन्तां धर्मकर्मसमूहाः प्रदीयन्तां नानाविधानि दानानि विधीयन्तां विविधानीष्टजनसमागमसाधनानि विधानानि । तेषु तेषु च सत्कृत्येषु सति प्रसङ्गे युष्मदाज्ञावशंवदोयं जनोऽमी प्रधाना अमी च राजपुरुषा आज्ञाविधेया विधेया इति मे चरमा परमा च प्रार्थनेत्युक्त्वा प्रणम्य च विद्यालयं प्रत्ययासीत् ।

ततःपरं शैब्यया माळव्या च समारब्धानि यमनियमव्रतपालनपूर्वं प्रवृद्धया श्रद्धया निःशेषाणि शास्त्रोक्तानि सत्कृत्यानि । तथाहि । ददतुः सत्पात्रेभ्यो ब्राह्मणेभ्योनुदिनमसंख्यानि दानानि भोजयामासतुः सुधारसनिर्विशेषाणि भोजनानि नियुतशोनुवासरं वसुधासुधाशनान् परिपोषयामासतुः प्रतिवेळमाश्वपचं दीनानाथकृपणप्राणिवर्गं श्रवणाभरणतां प्रापयामासतुश्चानुक्षणं शास्त्रेतिहासपुराणानि दयामये हृदये धारयामासतुः प्रतिलवं परमेश्वरचरितानि पूजयामासतुश्चानुसूर्योदयं परमया भक्त्या भक्तजनभद्रंकरं श्रीशंकरम् । एवं वर्तमानयोस्तयोर्व्यतीतानि बहूनि गणरात्राणि ।

वामदेव ! पुण्यकारिणामगण्यतां गतानि पुण्यानि पुनःपुनः कल्याणाभिमुखमेवाकर्षन्ति पुण्यकारिण इति नाविदितं ते । निःसंख्यनिष्प्रतिमतमपुण्यकारिण्या महाराज्ञ्या शैब्याया महाराज्ञ्या माळव्याश्च प्रतिक्षणप्रवृद्धया श्रद्धया रचितानां तेषां तेषां सुकृतानां प्रभावेणैवात्मकृतेषु सुकृतेष्वपरितोषः प्रादुर्बभूव । तादृशासंतोषप्रादुर्भावसमकालमेवाकस्मान्महामुनिरुग्रतपास्तयोर्नयनयुगलाङ्गणातिथितामगच्छत् । तदीयदर्शनादेवानन्दसंदोहमग्नमानसे ते निजासनादुत्थाय विधिव-

दभ्यर्च्य तं मुनिप्रवरं प्रणामप्रणम्रे प्रार्थयामासतुश्च । अयि मुनिमण्डलाखण्डल ! चिरप्रेषितात्मप्राणप्रियविरहज्वलनज्वालाजालाकुलान्तःकरणाभ्यामावाभ्यां निजनिजजीवितवल्लभसमागमावाप्तये पुण्यकर्मैव परमं साधनं धनं बलमवलम्बनं चेति मत्वा कृतानि यथाशक्ति सुकृतानि परं सुकृतशतेष्वपि सद्यः श्रेयस्करं सुकृतं किमप्यन्यदेव न तद्भवादृशमहात्मजनानुग्रहमन्तरा जनेन ज्ञातुं शक्यते ततः कृपापीयूषप्रपायमानमानसेन भगवतैवोत्तमतमं निःश्रेयसाभ्युदयकरमघौघहरं च किमपि सुकृतं कथयित्वानुग्रहीतव्ये धर्मपुत्र्यौ ते इत्युक्त्वा तूष्णीं बभूवतुः । उग्रतपास्तु तयोर्वचनविरामोत्तरक्षण एव वत्से शैव्ये ! वत्से मालवि ! सन्त्यस्मिन् जगति निःसंख्यानि सत्कृत्यानि नानाविधानि दानानि नैकप्रकाराणि च धर्मकर्माणि परं तेषां सर्वेषां मध्ये विद्यादानप्रभवः प्रभावः कोप्यन्यादृश एव जरीजागर्ति । न सुवर्णदानानि न रत्नदानानि न भूमिदानानि नान्नदानानि न वस्त्रदानानि न सर्वस्वदानानि नाभयदानान्यपि विद्यादानसमानमानपात्रतामवलम्बन्ते । तेन खलु कृतान्यसंख्यानि सुकृतानि वितीर्णानि सहस्रशो गोदानानि दत्तानि कोटिशो रत्नदानानि समर्पिता सत्पात्रायासागरं ससागरा सागराम्बरा परिपोषितोत्तमोत्तमान्नपानदानसहस्रैर्लोकत्रयी भुवनचतुर्दशी वा दीनानाथकृपणसात्कृतमनेकवारं मृत्पात्रमात्रशेषं सर्वस्वं समार्पिता सर्वेभ्यो लोकेभ्योऽभयभिक्षा च येन परमेण प्रेम्णा वितीर्णे विद्यार्थिभ्योऽनन्यसमानमुत्तमतमं विद्यादानमिति मन्येहम् । विद्यादानमहिमा न केनापि वर्षसहस्रैरपि वक्तुं शक्यते । न विनागण्यैः प्राक्तनपुण्यैर्विद्यार्पणप्रवणान्तःकरणता संजायते जनानाम् । परमया श्रद्धया प्रीतिपूर्वं कस्मैचनापि समर्पितमेकमप्यक्षरमक्षरसुखसमर्पणे कल्पतरुकल्पमिहामुत्र च भवति यर्हि तर्हि सत्पात्राय प्रवृद्धया श्रद्धया समर्पिता सद्विद्या तु सकलपुरुषार्थसमूहसमर्पणे कामदुघैव भवेदिति किं पुनर्वक्तव्यम् । न सुवर्णैर्नरत्नैर्न धरया न

धामभिर्नान्नैर्न सर्वस्वेन नाभयदानेन वा विद्या संपाद्यते । हृद्ययानवद्यया विद्यया तु पारेपरार्द्धं सुवर्णानि संपाद्यन्ते कोटिशो रत्नान्युपार्ज्यन्ते निःसंख्येभ्यो लोकेभ्योन्नदानानि दातुं शक्यते निःसीमशोभोपहसितामरवरभवनानि भवनानि लब्धुं शक्यन्ते शक्यन्ते चासमुद्रं समुद्रमेखलामात्मवशे कर्तुम् । नैतावदेव निःसीममहिममहितयातिहितया हि तया नरः स्वयमभयो भवति प्रभवति च नरानपरानप्यभयान् कर्तुमनेकान् । किंबहुना निःशेषनिःश्रेयससंपत्संपादनसाधनं तु विद्यादानमेव नान्यत् । किंच नैतावतान्येषां पुण्यानां निष्फलता शङ्कनीया यतोऽद्यावधि वत्साभ्यां प्रबद्धया श्रद्धया कृतैः सुकृतैरेव वत्सयोर्मनसि पुण्यकर्मापरितोषः समुत्पादितः । सद्यः श्रेयस्करं सुकृतं किमप्यन्यदस्ति नैतन्महात्मजनानुग्रहमन्तरा ज्ञातुं शक्यत इति वितर्कश्च तैरेव प्रादुष्कृतः । तादृशवितर्काविर्भावसमकालमेवाहमपि तैरेव दूरादाकृष्यात्र युष्मत्समीपमानीतस्तैरेव मद्वचसि युवयोः श्रद्धाविष्कृता तैरेव चाहमपि प्रेरित उत्तमोत्तमं विद्यादानरूपं सुकृतं भवतीभ्यामुपदिशामीत्यसंशयमवसेयम् । प्रियपुत्र्यौ मे ! युष्माकं युष्मत्प्राणनाथानामप्सरसां च तासां कल्याणपरम्परां विद्यादानमेव करिष्यति । ततो भवतीभ्यां प्रतिदिनं प्रतिप्रहरं प्रतिमुहूर्तं प्रतिघटिकं प्रतिक्षणं च विद्यादानं विद्यादानं विद्यादानमेव परमेण प्रेम्णार्पणीयमित्युक्त्वान्तर्दधे । अन्तर्हिताय मुनिमहेन्द्राय तस्मै प्रणामान् विधाय सदुपदेशरूपं तदीयमुपकारभारं शिरसा वहन्त्यौ शैब्यामालव्यौ स्वस्वराजधान्यां पत्तनेषु पुरेषु ग्रामेषु व्रजेषु च बालाध्ययनशाला बालिकाध्ययनशालाः पुंपाठशालाः स्त्रीपाठशालाश्च विशालाः स्थापयामासतुः । निगमागमापारपारावारपारंगमप्रज्ञान् काव्यकोशचम्पूनाटककथाकथानकाभिज्ञान् सत्यार्जवसौशील्यसारल्यनिलयान् शिष्यवत्सलान् दयार्द्रहृदयान् सहृदयान् तासु दैशिकपदाध्यक्षान् चक्रतुः । पाठशालास्थितस्याखिलविद्यार्थिसार्थस्य शारीरारोग्यसंपत्संपादनायायुर्वेदविद्या-

विशारदैः सद्वैद्यैः संयुतान्नानाविधौषधप्रकरपूर्णानौषधालयान् विद्याभ्यासश्रमशान्तानां विद्यार्थिनां मनोविश्रामाय मनोज्ञान्युपवनानि सद्विद्याभ्यासाविघाताय विद्यालयाविदूर एव हृद्या भोजनशालाश्च कल्पयामासतुः । अनुदिनमनेके विद्यार्थिनस्तासु तासु पाठशालासु सुचिरमभ्यस्याभ्यस्य हृद्या विद्या विद्वच्चक्रचक्रवर्तिनः संबभूवुः । कन्याश्च कन्याशालासु सम्यगधीत्याधीत्य सद्विद्या अतिधन्याशयाः समभूवन् । पुस्तकालयेष्वालोक्यालोक्य पुस्तकप्रकाण्डानकाण्डाविर्भूततत्तद्भूतरसावेशविवशाशया निरतिशयानन्दाननुबभूवुरनुदिनमनेके मनीषिप्रवरा नरनिकराः । न किल बालाध्ययनशाला बालिकाध्ययनशालाः स्त्रीपाठशालाः पुंपाठशालाः पुस्तकालयाश्चाङ्गदेशे बङ्गदेश एव प्रतिपुरपत्तनग्रामं स्थापितास्ताभ्यां महासतीभ्यां किं तु स्वकीयप्राणप्रियप्रियमित्रस्य कलिङ्गदेशाधिपतेश्चित्रसेनस्योद्धाराय कलिङ्गदेशेपि प्रतिपुरपत्तनग्रामं बालाध्ययनशाला बालिकाध्ययनशालाः स्त्रीपाठशालाः पुंपाठशालाः पुस्तकालयावलयश्च निर्निमित्तस्नेहार्द्रचित्ततयात्मवित्तव्ययेन स्थापितास्ताभ्याम् । प्रतिवर्षं तासु तासु पाठशालासु सद्विद्यानुशीलनासक्तमनसां विद्यार्थिनां परीक्षामपि स्वयं शैव्यामालव्यौ चक्रतुः । परीक्ष्य परीक्ष्य तेषां तेषां विनयशक्तिं विवेकशक्तिं विचारशक्तिं वक्तृत्वशक्तिं लेखनशक्तिं कवित्वशक्तिं मननशक्तिं च तत्तदनुसारेण वस्त्राभरणपुस्तकादि पारितोषिकं प्रायच्छताम् । एवमङ्गबङ्गकलिङ्गदेशस्थाशेषपत्तनपुरग्रामस्थापितपाठशालापरीक्षणपरायणान्तःकरणयोस्तयोः प्रतिवर्षमेकादशमासास्तु प्रवासस्थयोरेव व्यतीयुरवशिष्टमेकमासं च कदाचिच्चन्द्रहासराजधान्यां कदाचिच्च रुक्माङ्गदराजधान्यां निर्गमयामासतुः । एवं वर्तमानयोः शैव्यामालव्योः प्राणप्रियवियोगदुःखात्कालप्राबल्याच्च प्राप्तया जरया श्रोत्रयोः श्रोत्रत्वशक्तिर्लोचनयोरवलोकनशक्तिर्वाचो वक्तृत्वशक्तिर्हस्तयोर्लेखनशक्तिः पादयोश्चलनशक्तिश्च क्षीणतामगच्छन्न पुनर्विद्यादानासक्तिः क्षीणतामगच्छत् । सा तु प्रतिदिनं

प्रवर्धमानप्रसरा विस्मयपयोधिपूरमग्नान् विदधे प्रज्ञाप्रसरान्नरप्रवरान् । प्रतिदिनमेधमानाधिव्याधिव्यथाधिक्योपि वार्द्धक्ये वर्तमानयोः प्राणप्रियप्रवृत्तिलेशमप्यनुपलभमानयोस्तयोर्न विद्यादानेऽरुचिरश्रद्धाऽनादरो वा स्वप्नेप्याविर्बभूव, प्रत्युतास्मिन् जन्मनि परस्मिन् वा जन्मनि यदाकदाचिद्वास्माकमस्मत्प्राणप्रियाणां च श्रेयस्करं विद्यादानमेव भविष्यति नान्यदिति दृढं निबद्धश्रद्धे संबभूवतुः । तयोस्तादृशीं वृद्धावस्थां विलोक्य चन्द्रहासरुक्माङ्गदावपि समारोप्य राज्यभारं प्रधानेषु मातृभ्यां सह प्रतिपुरपत्तनग्रामं पाठशालापरीक्षणाय परिभ्रमणं चक्रतुः । एकदा च बङ्गदेशराजधान्यां परीक्ष्य बालाध्ययनशालां समर्प्य बालेभ्यो विद्याभ्यासानुसारेण पारितोषिकं कन्याशालायां च परीक्ष्य सकलाः कन्याः समर्प्य ताभ्यो वस्त्रालंकारपुस्तकादीनि बहूनि पारितोषिकाणि विसर्ज्य चान्याः कन्याः पाणिग्रहणार्हवयोवतीनां सद्विद्यासंपत्संपादनधन्यानां सत्कुलकन्यानां पुरतः प्रारब्धं पतिव्रताधर्मबोधकमुत्तमोत्तमं भाषणं प्रणयोत्साहसमुत्सारिताखिलक्लैब्यया महाराज्ञ्या शैब्यया । श्रुत्वैव यच्चित्रलिखिता इवासन् सकलाः कन्याः महाराज्ञी मालवी राजकुमारौ चन्द्रहासरुक्माङ्गदौ च । चिरकालादतिवेगाच्च सतीधर्मबोधकं भाषणं चरीकरीति भगवती शैब्या ततश्चातीव श्रमः संजायते सोयं श्रमः परिणतावतीव दुःखदो भविष्यति तस्या इति निपुणं जानन्तोऽपि तद्भाषणागतालौकिकरसास्वादलोलुपतया न तेषां मध्यात्कोपि मातरलमेतावता भाषणेन नाधिकं श्रमं सोढुं शक्तं मातुरिदं शरीरं, एतद्भाषणकरणजन्यः श्रमो यद्यपि सतीधर्मप्रियतया नाधुनात्रभवत्या भवत्या ज्ञायते परं परिणतावतीव दुःसहदुःखदो भविष्यति तस्माद्विरम्यतामस्मात्परिश्रमादिति वक्तुं शक्तिवान् संबभूव । केवलं तेपि भाषणश्रवणपरवशांतःकरणाश्चित्रलिखिता इव निश्चलाङ्गा निश्चलमनसश्च सतीधर्मभाषणामृतपानं श्रवणपुटैः कुर्वन्तो विस्मयविस्मृतनिमेषा विस्मृतात्मकर्तव्याश्चा-

सन् । शैब्या तु भाषणपरिसमाप्तावयि प्रियपुत्र्यो मे! किं बहुना सत्कुलसंभवानां सतीनां तु संसारसर्वस्वं जीवितसर्वस्वं परमं दैवतं च स्वकीयः प्राणप्रियः प्राणप्रियः प्राणप्रिय एवेति चरमं वचः समुच्चार्यावनौ न्यपतत् । त्वरिततरमेव महाराज्ञ्या मालव्या कुमारेण रुक्माङ्गदेन कुमारेण चन्द्रहासेन च समीपमुपेत्य मातः शैब्ये मातः शैब्ये ! समाश्वसीहि समाश्वसीहि, किमिदमकस्मादापतितमिति सोद्वेगं ब्रुवद्भिः सहस्रशो मूर्छापनयनोपचाराः प्रारब्धाः, परं सर्वेपि ते दैवादकिंचित्करतामेवागच्छन् । शैब्यायाः प्राणास्तु भाषणसमाप्तिशंसिभिः प्राणप्रियः प्राणप्रियः प्राणप्रिय एवेति शब्दैः सहैव निःसृता आसन् । उपरतिमुपगतैव माता शैब्येति निश्चित्य शोकाक्रान्तहृदयौ कुमारौ रुक्माङ्गदचन्द्रहासौ कन्याश्च सकलाः करुणकरुणान् विलापान् कुर्वन्ति स्म यावत् तावत् महाराज्ञी मालव्यपि वत्स रुक्माङ्गद! वत्स चन्द्रहास! विदितवेदितव्ययोर्वत्सयोरग्रे न किंचिदुपदेष्टव्यं पश्यामि तथापि या या बालाध्ययनशाला या या बालिकाध्ययनशालाश्च प्रतिपुरपत्तनग्रामं स्थापिताः सन्ति तासां तासां सावधानेन मनसा संभावना विधेया भवद्भ्यामिति चरमा परमाभ्यर्थना मे, यतो निखिलेपि विश्वंभरावलयेस्मिन् सकलांहोनिकरनिराकरणकारणं सकलापच्चयोन्मूलनमूलं सकलश्रेयःसंपत्संपादननिदानं च विद्यादानं विद्यादानं विद्यादानमेव नान्यदिति विदितपूर्वमेवायुष्मतोरिति वदन्ती प्राणान् परिमुमोच । एवमकस्मादुभयोरपि जनन्योर्युगपदेव प्राणप्रयाणमहापत्प्रहारात् कुमारयो रुक्माङ्गदचन्द्राहासयोरन्तःकरणे निरवधयो विषादविषोदधिमहोर्मयो मुहुर्मुहुराविरासन् । युक्तं चैतत् यतो मातृचरणानां पितृचरणानां च जागर्ति जगति यत्किमपि स्वेष्वपत्येषु निष्प्रतिमं प्रेमप्राबल्यं न तत्सहस्रांशोऽपि कुत्राप्यन्यत्र विलोक्यते । मातरः पितरश्चापत्यमुखदर्शनसुखसंप्राप्तये यद्यत्कुर्वन्ति तत्तत्केनान्येनात्र कर्तुं शक्यते । मातरः पितरश्च स्वाप-

त्यनिमित्तं यानि यानि दुःखानि सहन्ते तानि तानि दुःखानि केनान्येनात्र सोढुं शक्यन्ते मातरः पितरश्च यानि यानि स्वापत्यप्रियहितानि समाचरन्ति तानि तानि प्रियहितानि केनान्येनात्र समाचर्तुं शक्यन्ते न केनापीत्यद्वापरं निर्निमित्तनिःसीमनिष्प्रतिमप्रेमावेशविवशाशयौ मातापितरौ हि सर्वेषां परमेश्वरीपरमेश्वराविवाहर्निशमभिवन्दनीयौ समुपासनीयौ शिरोधारणीयाज्ञाक्षरौ चेति प्रतिनिगमागमेतिहासं प्रसिद्धमेव । यद्यपि सर्वोऽपि प्राणिवर्गो यादृशीं यावतीं च मातॄणामुपकारभारवत्तां मातॄणां ममत्वपात्रतां मातृरूपच्छत्रच्छायया निरस्ताशेषसंतापतां च बरीभरीति तादृशीं तावतीं च पितॄणामुपकारभारवत्तां पितॄणां ममत्वपात्रतां पितृरूपच्छत्रच्छायया निरस्ताशेषसंतापतां च बरीभरीत्येव तथापि स्वापत्येषु मातॄणामुपकारः कोऽप्यन्यादृश एव मातॄणां ममत्वं किमप्यन्यादृशमेव मातॄणां कृपालुता काप्यन्यादृश्येव मातॄणां वत्सलता च काप्यन्यादृश्येव दरीदृश्येव । एवं यर्हि स्वापत्येषु मातृकृतानामुपकाराणां मातृकृताया ममताया मातृकृतायाः कृपाया मातृकृताया वत्सलतायाश्च तुलामधिरोढुं पितृकृता उपकाराः पितृकृता ममता पितृकृता कृपा पितृकृता वत्सलतापि च न प्रभवन्त्येव कुतस्तर्हि मातृवात्सल्यस्य सहस्रांशोपीतरसंबन्धिनां हृदयेषु प्रादुर्भवेत् । मातॄणां स्वकीयां संततिं सुखिनीं विलोक्य याः स्फाराः स्फारा हर्षाश्रुधारा नयनेभ्यो निःपतन्ति ताः कस्यापरस्य नयनाभ्यां निपतिष्यन्ति मातॄणां स्वकीयसन्ततेरभ्युदयोद्वीक्षणाय हृदये या काप्यातुरता प्रादुर्भवति सातुरता कस्यापरस्य हृदये प्रादुर्भविष्यति मातरोऽनुदिनमात्मसन्ततिं यादृशीभिर्दयादृष्टिभिर्विलोकयन्ति तादृशीभिर्दयादृष्टिभिः कोऽपरो विलोकयिष्यति मातरश्च यथा स्वीयसन्ततिसुखविलोकनेन सुखवत्यः स्वीयसन्ततिदुःखविलोकनेन दुःखवत्यश्च भवन्ति तथा कोऽपरो भविष्यति न कोपीति निःशङ्कमेव । कतिकति न जनन्यः स्वकीयसंतानसु-

स्वार्थमेकभुक्तमाचरन्त्यो विलोक्यन्ते कतिकति न जनन्यः स्वकीयसंतानश्रेयोर्थमुपवासपरंपरामाचरन्त्यो दृश्यन्ते कतिकति न जनन्यः स्वकीयसंतानहितार्थं यमनियमनियुतानि परिशीलयन्त्यो लक्ष्यन्ते कतिकति न जनन्यः स्वकीयसन्तानसंरक्षणाय नानाविधानि दुःखान्यनुभवन्त्योऽनुभूयन्ते कतिकति न जनन्यः स्वकीयसन्तानाभ्युदयाय सर्वसुखानि परित्यजन्त्यः प्रेक्ष्यन्ते, कतिकति न जनन्यः स्वकीयप्राणपरित्यागेनापि स्वकीयसन्तानश्रेयःपरम्पराः समाचरन्त्यो नयनाङ्गणातिथ्यमुपयान्ति । सोयमकारणाकृत्रिमभावो हेलाहसितान्यरसप्रभावो वत्सलरसानुभावो न केवलं मनुष्यजातिमातॄणां हृदयेषु जागर्ति किं तु पशुपक्षिणां मातरोपि वात्सल्यरसावेशविवशाशया विलोक्यन्त एव। किं चापहस्तिताशेषोष्ममहिमदुःसहतमहिमवर्षिण्यां दीर्घतमायां माघमासतमिस्त्रायां स्वयं स्वीयापत्यमलमूत्राद्यार्द्रतर आस्तरणे शयनं विधाय स्वापत्यमनार्द्रास्तरणे मातर एव स्वापयन्ति स्वापत्यारोग्यतायोग्यताप्तये कटुकटूनि भेषजानि मातर एव सेवन्ते स्वयं कदन्नान्युपभुज्य स्वापत्येभ्यः स्वादुस्वादून्यन्नानि च मातर एव समर्पयन्ति । किं बहुना मातृवात्सल्यवर्णनं विधातुं ग्रन्थकोटिभिरपि न केनापि पार्यते । तथापि विस्मृत्य मातॄणां निष्प्रतिमानुपकारान् न प्रगणय्य मातॄणामनन्यलभ्यां दयादृष्टिसुधावृष्टिं न विलोक्य मातॄणां यावदायुरविस्मार्यं वात्सल्यं अनादृत्य मातॄणां कल्पायुषाप्यप्रतिक्रियार्हं स्वापत्यप्रियहितैषित्वं दूरीकृत्य मातृकृतान्यात्महितानि न संस्मृत्य मातृभिरात्मनः श्रेयसे सोढानि दुःखसहस्राणि न दत्वा च मातृभिराजन्मतः कृतानामसंख्यातानामात्मप्रियाहितानां मध्य एकस्मिन्नपि दृष्टिं केचन कुपुत्राः क्रूरतरकृतघ्नतमसमवयोविवशाशयाः केचन कुपुत्राः नीचतरनारीपिशाचीपरिगृहीताः केचन कुपुत्राः कुटिलगतीनां छिद्रान्वेषिणां द्विजिह्वानां जिह्वाविषविवशाः केचन कुपुत्राः कामक्रोधलोभमोहमदमत्सरपरतन्त्राः केचन कुपुत्रा ईर्ष्याधीनाः

केचन कुपुत्राः परप्रेरणापरवशाः केचन कुपुत्राः स्वकीयमूर्खताज्ञतामूढतारूढस्वान्ताः कृतघ्नपुरःसरतामुपेत्य न मातॄणां चरणपरिचर्यां कुर्वन्ति न मातॄणां चरणाभिवन्दनं कुर्वन्ति न मातॄः पूज्यधिया पश्यंति न च मातॄणां केनापि प्रकारेण स्वान्तसंतोषं संपादयन्ति । दूरेस्तु नाम मातॄणां चरणपरिचरणचरणप्रणमनान्तःकरणपरितोषकरणवार्तापि प्रत्युत केचन कुपुत्रा नानाप्रकारैर्मातॄणामन्तःकरणानि क्लेशयितुमेव प्रबद्धपरिकराः परितः प्रेक्ष्यन्ते । हा हन्तेदृशानां क्रूरक्रूरतराणां कृतघ्नकृतघ्नतमानामधमाधमानां च कुपुत्राणां किं कदापि जगति जयो भवति किं कदाप्यभ्युदयो भवति किं कदापि संपदः संभवन्ति किं कदापि सत्कीर्तयः प्रसरन्ति किं कदाप्यमन्दानन्दसंदोहः प्रादुर्भवति किं कदापि निष्प्रतिमप्रतापश्च प्रोज्जृम्भते न कदापीति निर्विवादम् । न ते कुपुत्राः कदाप्यैहिकं श्रेयः समधिगच्छन्ति न च ते कुपुत्राः कदाप्यामुष्मिकं वा श्रेयः समधिगच्छति किंतु केवलमत्रानल्पतमकल्पस्थायिदुष्कीर्तिकज्जलकालिम्ना कालीकृत्यात्मनो जनुर्जीवितं च समधिगम्य सकललोकतिरस्कारपात्रतां सज्जनधिक्कारपात्रतामार्यजनानादरपात्रतां च, शीतोपचारशतैरप्यनुपशमनीयेनानुतापाग्निनानुक्षणं प्रतप्तान्तःकरणा नियतं निरययातनानियुतान्यमुत्राकल्पमनुभवन्त्येव । यथा जगति कुपुत्रपांसुपरमाणवः सर्वजनदृष्टीरुद्वेजयन्ति तथा सद्वंशसंभवाः सत्पुत्रमुक्तामणयोऽपि सकललोकलोचनान्यनुवेलमाह्लादयन्ति । ये हि सुपुत्रा मनसा वचसा कर्मणा च परमं दैवतं संसारसर्वस्वं जीवितसर्वस्वं च मातापित्रोश्चरणारुणार्णोजयुगलपरिचर्याचरणमेव मन्यन्ते । तिमिरं तेजसो विधुंतुदः शरद्विधोर्हालाहलं च पीयूषस्य यदि तुलामारोहेत्तर्हि कुपुत्रः सुपुत्रस्य तुलामधिरोहेत् । सूक्ष्मया दृशा विचार्यमाणे न कुपुत्रः पुत्रशब्दवाच्यतामर्हति यतः पुंनाम्नो नरकात्त्रायतेसौ पुत्र इति । स्वीयैः सदाचरणैर्न केवलं मातापित्रोः किं तु

सर्वेषां पूर्वजानां नरकात्संरक्षणकरणकारणतया सत्पुत्रस्तु सार्थामेव पुत्राभिधां बरीभर्ति । परं कुपुत्रस्तु नीचनीचतराचरणनिचयैः सहमातापितृभ्यां सर्वेषां पूर्वजानां निरययातनायुतप्रदाननिदानतया कथं पवित्रां पुत्राभिधां धर्तुमर्हेत । ते तु पित्रोः शरीरसंभवा मानवाकृतयः कृमय एव केपि, ये पिबन्त्यनुदिनं पित्रो रुधिराणि । सत्पुत्ररत्नानि स्वीयां जातिं ज्ञातिं कुलं गोत्रं निलयं नगरं देशमप्यखिलं स्वकीयसद्गुणगणैर्भूषयन्ति, कुपुत्रकौलेयकास्तु स्वीयां ज्ञातिं जातिं कुलं गोत्रं निलयं नगरं देशमप्यखिलं स्वकीयदुराचरणनिचयैर्दूषयन्ति । एवं जगति सुपुत्रत्वकुपुत्रत्वभेदेन द्विविधा हि पुत्राः सर्वत्र लक्ष्यन्ते । चन्द्रहासरुक्माङ्गदौ राजकुमारौ तु सत्पुत्रमण्डलमौलिमण्डनमुक्तामणी स्वकीयसद्वृत्तसद्गुणगणप्रभाप्रभावेण भूषयामासतुः स्वकुलानि स्वपुराणि स्वपत्तनानि स्वराजधानीं स्वदेशांश्च । मातृभक्तिभरनम्रौ पितृभक्तिपूर्णाशयौ गुरुभक्तिभूषाभूषितौ च तौ विद्याविनयविवेकधैर्यौदार्यशौर्यार्जवदयादाक्षिण्यसौजन्यसौशील्यसौहार्दादिसकलसद्गुणरत्नरत्नाकरौ सर्वेषां निःसीमहर्षप्रकर्षवर्षर्तुकारणतामगच्छताम् । नेश्वरकृपया तयोः क्रूरचरित्राणि कृतघ्नतापिशाचीस्पर्शापवित्राणि दुर्मित्राणि बभूवुर्न पूर्णतमपूर्वजनुःपुण्यप्रभावेण ताभ्यां नीचकुलसंभवा नीचनीचाचरणचणा कटुकटुतरभाषणा भीषणा कुभार्या परिगृहीता । न सद्भाग्यैः कुटिलगतयो भयंकराकृतयो हृदयोद्वेगकारिदर्शना द्विजिह्वा विनतानन्दनयोरिव तयोः समीपमभ्युपसर्तुं प्राभवन् सुविद्याप्रदसद्गुरूणां करुणावलोकनप्रावल्येन । च न कामो न क्रोधो न लोभो न मोहो न मत्सरो न तनुमदो न धनमदो न यौवनमदो न विद्यामदो नाभिजनमदो न राज्यमदो वा तयोः कमलमिव कोमलममलं च मानसं जलमिव स्वप्नेपि पस्पर्श। ततो न तयोर्मातृवात्सल्यविस्मृतिर्मातृगुणगणतिरस्करणं मातृकृतापारतरोपकारभारदूरीकरणं च स्वप्नेपि चेतसि प्रादुर्बभूव। तौ

तु वज्रपातनिर्विशेषेण मातृद्वयमरणेन जीर्णारण्यमिव जगत् निःसारताशून्यमिव संसारं भारमिव जीवितधारणं च मन्वानौ युगपन्मूर्च्छामुपगम्य मुहूर्तात्प्राप्तसंज्ञौ गलदविरलनयनजलजालौ दुःखावेगगद्गदया गिरा विलापान् चक्रतुः ।

मातर्मालवि हा शैब्ये मातः स्नेहमयाशये । अनाथान्नः परित्यज्य क्व कस्माद्गम्यतेऽधुना ॥ १ ॥ उन्मील्य नेत्रकमले मनाङ्नौ पश्य ते सुतौ । अमूश्च धर्मपुत्रीर्वां दशात्यन्तदयार्द्रया ॥ २ ॥ वात्सल्यं क्व विलीनं वां दयापि सततोदया । यन्निजौ न प्रियौ पुत्रौ पुत्रीर्वाऽमूर्न पश्यथः ॥ ३ ॥ अथवा युक्तमेवैतद्युवयोर्नेत्रमीलनम् । न यद्वां पुण्यदृक्पात्रं कृतघ्नाः पापिनो वयम् ॥ ४ ॥ दुर्भाग्यविषवल्लर्यो मातरौ फलिता हि नः । यद्वां पदाम्बुजद्वन्द्ववियोगोऽजनि सांप्रतम् ॥ ५ ॥ शुष्को नः पुण्यकल्पद्रुः पुष्टः पापविषद्रुमः । क्षीणा च भाग्यसंपत्तिर्यद्युवां स्वःपुरं गते ॥ ६ ॥ मन्यामहे भाग्यवतां गृहाश्च विग्रहाः सदा । भवन्ति पुण्यशीलाभिर्मातृभिः समलंकृताः ॥ ७ ॥ हतं किमपि वात्सल्यं निःसीमानुपमं च तत् । अद्य प्रति सतीलोकं प्रयाणे युवयोः सति ॥ ८ ॥ इदानीं मन्दभाग्यान्नो दूरादप्यागतान् गृहम् । हर्षाश्रुपूर्णया तूर्णं दृशा पश्यति काऽपरा ॥ ९ ॥ हाद्यनोऽभ्युदयं श्रुत्वा श्रुत्वा वा नः शुभं यशः । अमन्दानन्दसंदोहोन्यस्याः कस्या भविष्यति ॥ १० ॥ कुशली चन्द्रहासः स्विद्वत्सो रुक्माङ्गदश्च मे । इत्यस्मद्विषया चिन्ता कस्याहाद्य भविष्यति ॥ ११ ॥ दृष्ट्वा क्षुधा तृषा चार्तान् श्रुत्वा वापद्गतांश्च नः । कस्याश्चिन्तातुरं चेतो हा हन्ताद्य भविष्यति ॥ १२ ॥ निःसीम्नो निर्मलस्याद्य वात्सल्यस्यातुलस्य वः । किं सहस्रांशमपि हा द्रक्ष्यामोन्यत्र कुत्रचित् ॥ १३ ॥ एहि हे वत्स वत्सेति पुत्र पुत्रेति चासकृत् । किं हा स्वप्नेपि सस्नेहाः श्रोष्यामो मधुरा गिरः ॥ १४ ॥ कन्याशालास्थिता बालाः कन्या कान्यानु-

चासरम् । परीक्ष्य चाद्यार्पयिता ताभ्यो हा पारितोषिकम् ॥ १५ ॥ अनृणाः किं भविष्यामः कल्पकल्पायुषापि वः । उपकारसहस्राणां निर्मितानां प्रतिक्षणम् ॥१६॥ शून्यो देशः पुरी शून्या दिशःशून्या दशाप्यहो । हाद्य शून्यं जगत्सर्वं मातरौ नौ युवां विना ॥ १७ ॥ कृतघ्नानां वाग्विलापान् धिङ्मृषाश्रूणि चापि नः । अस्फुटद्धृदयानां वां दृष्ट्वाप्येतादृशीं दशाम् ॥ १८ ॥ कृतघ्नाः केपि चास्माभिः समाः सन्ति न मातरः । न युष्माभिः समाश्चान्याः क्षमावत्यः क्षमातले ॥ १९ ॥ अद्यैव नष्टं सर्वस्वं हा हा नौ मन्दभाग्यतः । अदर्शनदशां याते मातृचिन्तामणिद्वये ॥ २० ॥ भवतीभ्यामनुजनुर्जनुर्भवतु नः पुनः । यावद्भ्रमामः संसारे तावदीशप्रसादतः ॥ २१ ॥

इति विलपन्तौ पुनरपि मूर्छामीलितलोचनौ दुःखादवनौ पेततुः । मूर्छितौ तु तौ दृष्ट्वा सभयचिन्तातुराः सकलाः कन्याः सहोदरबान्धवनिर्विशेषबुद्धयः सहसा शीतोपचारसहस्रैरपगतमूर्च्छौ कुमारावकुर्वन् । प्राप्तसंज्ञौ च तौ क्षणं विश्रम्य मूर्च्छापनयनरूपं सर्वासां कन्यानामुपकारभारमपारमन्तःकरणेन मन्वानौ, प्रियस्वसारः ! सांप्रतमावां परमदयामयाशयमातृद्वयविनाशदुःखदावाग्निदग्धस्वान्ततया नाधिकं किमपि वक्तुं शक्नुवस्तथापि संक्षेपेणैतत्प्रोच्यते । या याः प्रतिपुरं प्रतिपत्तनं प्रतिग्रामं प्रतिव्रजं प्रतिघोषं त्रिष्वपि देशेष्वङ्गवङ्गकलिङ्गाख्येषु स्थापिता बालाध्ययनशाला बालिकाध्ययनशालाः पुंपाठशालाः स्त्रीपाठशालाः पुस्तकालयावलयश्चास्मन्मातृभिस्तासां तासां संभावनां यथापूर्वं वयं यावज्जीवं करिष्यामो नैतावदेव किंत्वस्मद्वंशसंभवा यावद्भूमण्डलाखण्डलतामनुभविष्यन्ति तावत्तेपि तत्संभावनां यथापूर्वं करिष्यन्त्येव ततो न केनाप्यध्यक्षेण न केनापि शिक्षकेण नकेनापि विद्यार्थिना च मातुर्मालव्या मातुः शैव्यायाश्च कैलासशैलावासव्यसनितां विलोक्य निराशता स्वान्ते स्वीकार्येत्युक्त्वा सुवर्णशिबिकारूढां मालवीं शैब्यां च स्वयं स्कन्धे शिबिकां निधाय स्मशानभूमिं गत्वा तत्र

यथाराजरीति यथाशास्त्रं च चन्दनमयचितायां प्रज्वलितायां मातृद्वयशरीरद्वयाहुतिं दत्वा शून्यशून्यचित्तौ बहु बहु विलप्य पुनः स्वसदनमुपेत्य मातृवियोगविह्वलौ विषादविषमयं समयमतिवाहयामासतुः । सत्पुत्ररत्ननिकराग्रगणनीययो राजकुमारयोर्मातृवियोगज्वलनज्वालामालाकुलं मानसं न दिवा न रात्रौ वा सुखलेशमपि क्वाप्यवापेति न चित्रम् परं बालाध्ययनशालाध्यक्षाणां बालिकाध्ययनशालाशिक्षकाणां पुंपाठशालापाठकानां स्त्रीपाठशालापाठकानां विद्यार्थिनां कुमाराणां कुमारीणां पुंसां स्त्रीणां च विद्यमानेष्वपि तातचरणेषु दीर्घायुष्ष्वपि मातृचरणेषु च महाराज्ञ्या मालव्या महाराज्ञ्याः शैब्यायाश्च परलोकप्रयाणेन जन्मप्रदात्मजननीजनकविनाशव्यथानिर्विशेषा कथापथातीता कापि व्यथा व्यथयामास स्नेहसान्द्राणि स्वान्तानि । व्यतीतास्वपि बव्हीषु मातृद्वयवियोगदुःखदीर्घदीर्घतमासु समासु न तेषां मनांसि मातृद्वयस्नेहं विस्मारयामासुर्न तेषां शोकाश्रुधाराः शोषमुपययुर्न च तेषां मातृद्वयमरणजन्य उद्वेगः क्षीणतामगच्छत् । इत्युक्त्वा श्रीमहेश्वरः प्रहस्य प्राब्रवीत् । वत्स वामदेव! कथारसः कोप्यन्यादृश एव जगति जागर्ति । पश्यामुना कथारसेनाहं प्रसङ्गान्तरमेवोपनीतोस्मि परं वक्तव्यं त्वेतदेवास्ति यदयं बिडालोः बिडौजःपुरे कोप्युत्तमतरोमरोभूत् परमात्मनोऽविमृश्यकारितयाऽमर्त्यताभ्रष्टो मर्त्यतामगच्छत् । तत्रापि केनापि सद्भाग्यप्रभावेण कलिङ्गाधिपतिश्चित्रसेनोऽभूत् । न तथापि तस्य चेतसि निजनीचकृत्यानुतापः समभूत्तेन नृपतिपदभ्रष्टोस्यां मार्जारजातावक्तीर्णः स्वनीचकृत्यजन्यानि दुःखान्यनुभवति । एवमुदीर्य मौनमालम्बमाने भक्तवत्सले श्रीचन्द्रचूडामणौ मुकुलितकरकमलयुगलः प्रणामप्रणम्रो वामदेवो, देव कृपापीयूषपारावार परमेश्वर! युष्मन्मुखकमलान्निर्गलितं हीनभागस्यास्य बिडालबालस्य पूर्वजनुर्वृत्तमेकावधानतया शृण्वता मया निपीताः शतशः सदुपदेशपीयूषधाराः

परमङ्गत्र्यङ्गदेशाधीशयोस्ताभ्यामुदग्रतपसस्तपस्विनस्तपोभङ्गकरणाय प्रेषितानामप्सरसां च किं जातं ? दृढप्रबद्धया श्रद्धया मालवीशैब्याभ्यां निरन्तरमर्पितस्य विद्यादानस्य किमपि फलं प्राप्तं नवेति ? किंच ते त्रयोपि राजानस्तिस्रोप्यप्सरसश्च पूर्वममरपुरवासा अमरवरा आसन् तथापि तेषां तासां च मनोवृत्तिः कथमकृत्ये प्रवृत्तेति सर्वं श्रोतुमुत्कण्ठते स्वान्तं मे ततस्तदपि श्रावयितुं कृपां कृपाम्बुधयो भगवच्चरणाः करिष्यन्त्येवेत्यप्रार्थयत् । वामदेवप्रार्थनापरिपाटीपरितुष्टः पशुपतिरपि, वत्स वामदेव ! देवलोकवासिनो देवाः सात्विकमनोवृत्तय एव भूतलवासिनो मानवा राजसमनोवृत्तय एव पातालतलवासिनो दानवादयस्तामसमनोवृत्तय एव भवेयुरित्यनुभवविरुद्धं, किंतु मनोवृत्त्यधीनानि देवत्वमानवत्वदानवत्वानि भवन्ति । पातालतलनिलयोपि योजस्रमश्रान्तसात्विकवृत्त्यतिरेकाक्रान्तस्वान्तः प्रभवेच्चेत्स देव एव मन्तव्यः । यश्च कश्चिदिलातलविलासलालसोपि संततं सत्वगुणतत्व एव मग्नप्रज्ञः संभवेद्यर्हि तर्हि स मर्त्योप्यमर्त्य एव मन्तव्यः । सुरपुरनिवासविलासभासुरः सुरोपि यो रजोगुणरजःपुंजमलिनमनोमिलिन्दो भवेचेत्स मानव एव मन्तव्यः । भूविवरवरनिवासोपि योऽजस्रमनुघस्रं रजःप्रसरपरतन्त्रतामनुभवेच्चेत्स दनुसंभवोपि मनुसंभव एव गणनीयः । स्वर्गवासिवर्गपुंगवोपि यस्तमस्तमःपूरदूरीभूतविवेकविलोचनो भवेच्चेददितिनन्दनोप्यसौ दितिनन्दनगणनायामेव गणनीयः । मर्त्यलोकौका अपि यस्तामसभावमसीमलीमसमानसो भवेच्चेत्स मानवोपि दानवोपमतां वरीभर्ति । इतरथा जगति श्रूयते यद्दुराचरणं शचीसहचरस्य नाकलोकपालस्य पाकवैरिणः सज्जनहृदयशल्यायितमहल्याभिलाषित्वरूपं तारागणशिरोमणेश्च ताराभिधगुरुदारापहरणपरायणत्वरूपं तत्किं तादृशोत्तमतमस्थाननिवासस्योचितं तत्किं देवानां देवत्वस्यानुरूपं किं च तत्तेषां स्वभावसिद्धसत्वगुणस्यानुकूलं वा । न हीति निर्विवादम् । तत्तल्लोकनिवासिनीनां

विलासिनीनां विषयेपि तथैवावधेयम् । ततो देवलोकवासिभिर्देवैरपि कथमात्मस्वभावविरुद्धमाचरणमाचरितमिति न विस्मयः कार्यः । सुरपुरवासिनोपि यदा तमोगुणलीनचेतसो भवन्ति तदा तेषां कृत्यानि; नाल्पनिन्दानिदानानि भवन्ति । भूमितलवासिनो मानवाः पातालतलवासिनो दानवादयश्च यदा सत्वगुणवृत्त्यधीना भवन्ति तदा तेषां कृत्यान्यप्यतिस्तुत्यानि संभवन्तीति जगत्प्रसिद्धमेवात उत्तमाधमकृत्यकृतिर्गुणवृत्त्यधीना गुणवृत्तिश्च सत्सङ्गासत्सङ्गाधीना वरीवरीति । यथायथा सत्संगतिः प्रभवति तथा तथा सत्वगुणवृत्तिप्राबल्यं जरीजृम्भीति । प्रस्फुरति सत्वगुणवृत्तिप्राबल्ये सत्कृत्यान्येव संभवन्ति । यथा यथा चासत्संगतिः संभवति तथा तथा रजस्तमोवृत्तिप्राबल्यं प्रोद्भवति प्रोद्भवति च रजस्तमोवृत्तिप्राबल्ये प्रोद्भवन्ति रजोधूसराणि तमोमलिलानि च कृत्यानि । ततो देवानां दानवानां मानवानामन्येषां च प्राणिनां कल्याणसंपत्संपादनसाधनं सत्संगतिरकल्याणकारणं चासत्सङ्गतिर्भवतीति निर्विवादं दरीदृश्यते । सुसङ्गसमुन्मूलनसपरिकरस्य दुःसङ्गस्य प्रभावेण बहवो देवा देवत्वात् बहवो दानवा दानवत्वात् बहवो मानवा मानवत्वात् बहवो मुनयो मुनित्वाद्बहवस्तपस्विनस्तपसो बहवो योगिनो योगाद्बहवो महात्मानो महात्मताया बहवो बुद्धिमन्तो बुद्धेर्बहवो विद्वांसो विद्वत्ताया बहवो विवेकिनो विवेकात् बहवो जितेन्द्रिया जितेन्द्रियत्वात् बहवो नीतिमन्तो नीतिमत्ताया बहवः सिद्धाः सिद्धेर्बहवो राजानो राज्यासनाद्बहवः सुशीलाः सौशिल्यात् बह्व्यः पतिव्रताश्चाप्रतिमादतिपवित्रात्पातिव्रत्यात् परिभ्रष्टा बभूवुर्भवन्ति भविष्यन्ति च । दुःसङ्गो हि चिह्नं मन्दभाग्यताभ्यागमस्य निमित्तं दुर्बलदशाप्रवेशस्य द्वारं विविधविपदागमनस्य अस्ताचलः सर्वाभ्युदयानां लोपामुद्रासहचरश्च सकलसंपत्समुद्राणाम् । अनेकवर्षपरिशीलितसत्सङ्गजन्यां सत्परिणतिकल्पलतां कतिपयकालकलाकलितोपि

दुःसङ्गः सद्य एव समूलमुन्मूलयतीति निगमागमेतिहासपुराणोपदेशसहस्रैर्जानतामपि जनानां समायास्यन्तीष्वायतासु तासु तास्वापत्सु विनापीच्छया विनापि प्रयत्नैरतर्कित एव कुतोप्यागत्य दुःसङ्गो मनोमन्दिरेषु बलात्प्रविशति । भूतप्रेतपिशाचावेश इव दुःसङ्गावेशोपि कमिव न विवशं विदधाति । दुःसङ्गहलाहलाचलारुहस्य सूक्ष्ममपि बीजं मनुष्याणामन्तःकरणालवाले पतनसमंसमयमेवाङ्कुरितं पल्लवितं फलितं च भूत्वा यावज्जीवं समास्वादयन्ति कटुकटून्यात्मफलानि निजच्छायाश्रितेभ्यो जनेभ्यः। भूतावेशः प्रेतावेशः पिशाचावेशो वा पवित्रैर्महामन्त्रैरपाकर्तुं शक्यते प्रमादोपभुक्तविषविषमवेगोप्यौषधैरपहर्तुं शक्यते निरवशेषं शरीरे प्रसृता अपि महामयाः सदुपचारैर्दूरीकर्तुं शक्यन्ते न पुनः क्षणार्धमपि सकृत्कृतप्रसङ्गो दुःसङ्गो दूरीकर्तुं केनापि कथंकथमपि शक्यते । दृश्यन्ते बहवस्तादृशा अपि सद्भाग्यसंपद्धरा नरा ये स्वप्नेप्यजातदुःसङ्गप्रसङ्गा गङ्गातरङ्गा इवातिनिर्मला निर्मलानि कुर्वन्ति दर्शनमात्रादेव मनुजनुषां मानसानि न पुनरेकोपि कश्चित्तादृशो दृष्टः श्रुतो वा पुरुषो यः सकृदुरीकृत्य दुःसङ्गं पुनर्दूरीकर्तुं प्रभवेत्तत्प्रसङ्गम् । ततः प्रथमतः प्रसङ्गादेव दुःसङ्गारेर्दूरीभवनं भवनं विविधश्रेयोविभवानाम् । परमेकवारं क्षणमपि रचितदुःसंगेन पुंसा परमेश्वरप्रसादपरंपरामन्तरा तत्प्रसङ्गभङ्गः कर्तुमशक्य एव । दृश्यतां तावद्दुःसङ्गदुर्विलसितम् ।

अङ्गवङ्गकलिङ्गानामधिपतयस्ते पूर्वस्मिञ्जन्मनि देवा आसन् ततोपि पूर्वस्मिन् भवे यमनियमदमशमसमन्वितविप्रावलीविलसितक्षिप्रासरित्समीपवर्तिन्यां श्रीमन्महाकालेश्वरमहानुभावेन शरणागतां जनतामवन्त्यामवन्त्यां श्रीमहाकालमहेश्वरावलोकनामन्दानन्दानुभवोपहसितसुधाशना वसुधासुधाशना आसन् । निगमागमोक्तसद्धर्मकर्मपरायणान्तःकरणानां श्रीचन्द्रचूडचरणैकशरणानां यमनियमसमुपासनविशदीकृतसकलसदाचरणानामपि तेषां

दैवदौर्बल्याद्दशामान्द्यात्प्राक्तनजनुःकृतदुष्कृतशतपरिणामाच्चान्वर्थनाम्नो दौर्जन्यधाम्नो दुर्मुखनाम्नो दुर्जनस्य दुःसंगः समभूत् । शान्तरसपीयूषपानप्रशान्तस्वान्ततया ते यद्यपि प्रतिदिनं प्रतिप्रसङ्गं प्रतिक्षणं च दुर्मुखस्य दुरुक्तियुक्तीर्दुराचरणानि दुर्विचारांश्च गर्हयामासुर्धिक्कारयामासुस्तर्जयामासुश्च तथापि निरन्तरमभङ्गदुर्मुखप्रसङ्गप्राबल्यप्रभावादेकदा तरङ्गिणीमवगाह्य विशुद्धया श्रद्धया भगवते भास्कराय प्रणामपुष्पाञ्जलीन् समर्पयन्तीं स्वधर्मसत्कर्मसेवनसंजातशर्मणो देवशर्मणोतिपवित्रां पतिव्रतां सौशील्यशालां नाम बालां पत्नीं पापया दृशा लतान्तरेषु क्वचिन्नीलीय मार्जारा इव क्षणं विलोकयामासुः । सच्छास्त्रशुभप्रसङ्गात्तदनुमहदनुतापतप्ताशयास्ते दुर्मुखमुखमपि नावलोकयामासुः । यद्यप्यवन्तीवासिनां तेषां शास्त्रसङ्गबलात्सत्सङ्गबलात्सदाचारबलात् परेश्वरार्चनप्राबल्याच्च न दुःसंगोधिकां पराभूतीपात्रतामनयन्मानसानि तथापि नैतदल्पं तेषामल्पमासीत् । यतः स्त्रीभिः परपुरुषेषु पुरुषैश्च परस्त्रीषु सपापेनेक्षणेन निर्मितं क्षणं क्षणार्धं वाप्यवेक्षणं परिसीमास्पदं पापानां निदानं निन्दितकृत्यानां कारणं सदाचरणमरणस्य पूर्वरूपं पूर्वपुण्यक्षयस्य हेतुर्धर्मसेतुध्वंसस्य मूलमकल्याणपरम्पराणामाघातस्थलमखिलसद्गुणानामुत्पत्तिक्षेत्रं च निखिलदुर्गुणगणानाम् । किंबहुना पापदृष्टिरेव परिहरति सभ्यताकल्पलतायाः संकल्पितसमर्पणप्रवणतां पापदृष्टिरेवावष्टंभयति सद्विद्याकामदुघाया दोहसंदोहान् पापदृष्टिरेव विनाशयति विवेकचिन्तामणेश्चिन्तितपूर्तिशक्तिं पापदृष्टिरेव भ्रंशयति सन्मार्गात् पापदृष्टिरेवातिवेलमाविलयति मतिमतावतिनिर्मलामपि सन्मतिसरितं पापदृष्टिरेव शोषयति गांभीर्यपारावारं पापदृष्टिरेव कलङ्कयति सद्यशश्चन्द्रचन्द्रिकां पापदृष्टिरेवावरणतिरस्करिणी परमेश्वरध्यानस्य पापदृष्टिरेवापहरणकारिणी त्रपायाः पापदृष्टिरेव पाठशालाखिलखलतायाः पापदृष्टिरेव च परिणतिरसंख्यानाम-

संख्यजनुःसंचितानामलघीयसामंहसामिति निगमागमपुराणेतिहासाः प्रतिपदं प्रबोधयन्ति । यद्यप्यनभिज्ञाऽभूद्देवशर्मणः सद्गुणगणरमणीया रमणी वासरमणिप्रबद्धावधानतयावन्त्यद्विजातिभिर्दुःसङ्गप्रसङ्गात्कृते दुष्कृतेः परं सकललोकशुभाशुभकर्मसाक्षी कर्मसाक्षिसूनुर्नानभिज्ञोभूत् गुप्तं लतान्तरेषु क्वचिन्निलीय तैः कृतेषुः दुष्कृतेषु । तत एव ते ब्राह्मणा आजन्मत आचरितैः सदाचरितैः कैवल्यमोक्षलक्ष्म्याः स्वयंवरणमालार्हतामुपगता अपि कतिपयवासरपरिचितदुःसङ्गप्रसङ्गाचरितपापदृष्टिप्रभावाद्देवपदमेवप्रापिता भगवताधर्मराजेन । देवशर्मापि स्वकीयसुकृतशतप्रभावेणोग्रतपानाम देवर्षिर्बभूव । पातिव्रत्यपवित्राशया सौशील्यशालापि स्वकीयं प्राणप्रियं पुनरुग्रतपसमेव पवित्रपातिव्रत्यप्रभावाद्भेजे । मर्त्यतामुक्ता अमर्त्यतायुक्ता अपिचावंत्या ब्राह्मणा दुःसङ्गप्रभावात् पुनरपि तामेव पतिव्रतां पापया दृशा विलोकयितुमुत्कण्ठां चक्रुः । अतिगुप्ततया निर्मिता अपि कल्मषलवास्तृणगणाच्छादिताग्निकणा इव किं क्षणं क्षणार्धं वा गोपयितुं शक्यन्ते नैवेति निर्विवादम् । अन्येद्युर्द्युलोककल्लोलिनीकल्लोलेषु सुचिरं निमज्योन्मज्य च समर्च्य परमया भक्त्या भगवन्तं लोकचक्षुषं समन्ताच्चारयन्ती चक्षुश्चक्षुर्गोचरांश्चकार लतान्तरेषु निलीय तिरस्करणीरिवामररमणीरग्रतः कृत्वा पापया दृशात्मानं विलोकयतोतिपामरानमरान् । तद्वीक्षणोत्तरक्षण एव निमील्याक्षिणी सा हा पामर्य्योऽमर्य्यो ! यद्यपि युष्माकममुना दुराचरितेन मनसि मे समुद्भवति यद्दुःसहं दुःखं न तद्वक्तुं शक्ता वाणी मे तथापि भवतीनामल्पज्ञतां विलोक्य दयार्द्रहृदयाहं संप्रार्थयामि परमेश्वरं भवतीनामपराधक्षमापनाय । निष्पापे प्राणिनि सपापेक्षणप्रेक्षणं हंहो किमल्पमंहो गण्यते । श्रुत्वैव तस्यास्तां वाचं सकम्पसकलशरीराः स्खलन्तः पतन्तः सहैवामरकन्याभिस्ताभिरमराः पलायनपरा बभूवुः । सौशील्यशाला तु निजाश्रममुपेत्य न्यवेदयन्निजप्राणप्रियायोग्रतपसे

पामराणां तेषाममराणां तां पामरताम् । श्रुत्वा चैतत्किंचित्प्रहस्य, प्रिये! नात्रोपालम्भार्हा देवा देवांगना वा पात्रं तूपालम्भसहस्राणां दुःसङ्ग एव तथापि न यदि तेभ्योपराधानुरूपं कमपि शापं प्रदास्यामि तर्हि ते पुनरप्ये-तादृशीरपराधपरम्पराः करिष्यन्ति तत्तेषामेवाहिततमं ततो देवास्ते नरदेवा भूत्वा शेषपुण्यसुखानि नरलोकेष्वेवानुभवन्त्विति तान् शशाप । तच्छाप-प्रभावाद्देवास्ते देवालयान्निपत्याङ्गवङ्गकलिंगेषु नरदेवा बभूवुः । यैः पूर्वजनुर्वा-सनावशतया तपस्विप्रवरस्योग्रतपसस्तपोभङ्गाय प्रेषिता अप्सरसस्ता मणि-मयशालभञ्जिका बभूवुर्नरनाथाश्च ते स्वकृतमहात्मजनापराधप्रभावादसंख्यानि निरयदुःखान्यनुभूयानुभूय ततो विमुक्ता निर्जनेषु वनेषु बिडाला भूत्वा दुःखपरंपरामनुबभूवुः । परं शैब्या मालव्या च विशुद्धया श्रद्धया वितीर्णस्य विद्यादानस्य प्रभावादङ्गदेशनरेशो वीरसेनश्चन्द्रकीर्तेर्महिष्याः सुशीलायाः कुमारः शत्रुशल्योऽभूत्, वङ्गदेशनरेशः कीर्तिसेनोपि बिडालताविमुक्तश्चन्द्रकीर्तेरेव मन्त्रिणः सत्यव्रतस्य सत्यशीलाव्हयः पुत्रोभूत्, अङ्गधराधीशमहिषी शैब्यापि स्वकृतविद्यादानप्रभावान्मद्रमहीमहेन्द्रस्य चन्द्रप्रभाख्या पुत्री जाता, वङ्गधरा-धीशमहिषी मालवी स्वनिर्मितसद्विद्यादानप्रभावान्मद्रमहीमहेन्द्रमन्त्रिणः शिव-शर्मणः प्रियंवदाह्वयाजनि तनया । उभे अपि ते विद्यादानजन्यानन्यतुल्या-गण्यपुण्यप्रभावात् स्वीयौ तावेव पूर्वजनुःप्राणप्रियौ शत्रुशल्यसत्यशीलौ प्राप्तवत्यौ । कलिङ्गदेशनरेशस्य चित्रसेनस्य नासीत्काचित्कुलीना कान्ता ततो वराकः स्वकृतपापदृष्टिदुष्कृतप्रभावादद्यापि बिडालबालतामेवानुभवति । तथापि तस्य भवद्धस्तपतनं भवत्प्रसङ्गादेतत्तपोवनप्रवेशश्च तन्मित्रपत्नीभ्यां शैब्यामालवीभ्यां तन्निमित्तं विहितस्य विद्यादानस्यैव प्रभावेणाभूदित्यद्वापरम-वगन्तव्यम् । केनापि प्राणिना कृतं किमपि दानं न कदापि निष्फलता-मालम्बते, तत्राप्यनन्यसमानं विद्यादानं कथमिव निष्फलतामुपगच्छेत् ।

वामदेव ! बिडालबालेस्मिन् दृढं दयार्द्रता ते जागर्ति ततो एनं समर्पयास्मा उग्रतपसे तपस्विप्रवराय येनायं निसर्गसिद्धदयामयाशयस्तदीयपूर्वजनुःसंबन्धिभिः समं समागमानन्दममन्दमनुभावयितुं प्रयतिष्यति । इति परमकृपालोः परमेश्वरस्य चरमवचोविरामसमकालमेवाकस्मादुग्रतपा गगनादवतीर्य सदाशिवपदाब्जमुकुले प्रणामपरंपरां रचयांकार । दृष्ट्वैवमकस्मादागतमुग्रतपसं वामदेवस्तु विस्मयमयपयोराशौ निमग्नमानसोभूत् । वत्स ! कुतस्त्वमत्रागत इति दयार्द्रहृदयेन दाक्षायणीहृदयदयितेन समन्दस्मितं पृष्ट उग्रतपा अयि ! भगवन्न किंचिद्भगवतोऽज्ञातपूर्वं तथाप्यनभिज्ञ इव पृच्छति भगवांस्ततो यथाज्ञं विज्ञापयामि । भगवन्नङ्गवङ्गकलिङ्गानां राजानः कथ श्रेयः श्रियं प्राप्नुयुः शृङ्गारमञ्जर्यादयोप्सरसश्च कथं शापमुक्ता भवेयुरित्यमुना जनेन विज्ञप्तो देवस्तेषां श्रेयःसिद्धये तदीयधर्मपत्नीभिर्विद्यादानं विधेयमित्याज्ञापयामास । तदनु देवाज्ञानुसारेणाङ्गराजधर्मपत्न्यै शैब्यायै वङ्गराजधर्मपत्न्यै मालव्यै च विद्यादानविधानमुपदिष्टं मया । मदुपदेशोत्तरक्षण एव च ताभ्यां प्रतिदेशं प्रतिपुरं प्रतिग्रामं च स्थापिताः पाठशालाः समर्प्यते च तासु तासु पाठशालासु विद्यार्थिभ्यः किमप्यनवद्यं विद्यादानम् । तत्प्रभावेण चाङ्गवङ्गनरपालयोः सद्य एव श्रेयो भविष्यतीति मन्येहं, परं कलिङ्गराजस्य धर्मपत्न्येव नास्ति पाणिग्रहीता ततस्तदीयं श्रेयः कथं भविष्यतीति देवं प्रष्टुमागतोहम् । किं च स्वस्वधर्माचरितसद्विद्यारत्नवितरणतरणिशरणतीर्णनरकार्णवावङ्गवङ्गमहाराजौ क्वावतीर्णाविति च प्रष्टुमागमनमत्र ममेत्यवददुग्रतपाः । उग्रतपसो वचनविरामे च शंकरोपि वत्स ! स्वल्पीकृतकामदुघाकल्पलताचिन्तामण्यादिसंकल्पितसमर्पणशक्ति विद्यादानं निष्फलं स्यादिति न स्वप्नेपि चिंतनीयं । भवदुपदिष्टाभ्यां शैब्यामालवीभ्यां वितीर्णस्य विद्यादानस्यैव प्रभावेण स्वकृतपापदृष्टिसमर्पितबिडालभावावङ्गवङ्गनाथौ सद्यो मुक्तबिडालभावौ

सांप्रतं शत्रुशल्यश्रुतशीलसंज्ञौ राजकुमारप्रधानकुमारौ जातौ । शैब्यामालव्यौ च मद्रदेशे चन्द्रप्रभाप्रियंवदासंज्ञे राजकुमारीप्रधानकुमार्यौ जाते, प्राप्ते च पुनः स्वीयौ तावेव पूर्वजनुःप्राणप्रियौ । वराकस्य कलिङ्गराजस्य तु पाणिग्रहीता धर्मपत्न्येव नासीत्ततस्तं बिडालभावात्का मोचयेत् । सत्कुलसंभवा धर्मपत्नी यद्यदात्मप्राणप्रियस्य प्रियं हितं च कर्तुं शक्नोति तत्तत्कर्तुं किमप्सरसः कदाचिदपि शक्नुवन्ति । सोयमिलाविलासी कलिङ्गानां यं त्वं मृगयसे हन्तात्मकृतपापदृष्टिदुष्टदुष्कृतप्राबल्याद्यापि बिडालबालदशामनुभवतीति मामङ्गुल्या दर्शयित्वा, वत्सौ वामदेवोग्रतपसौ ! दृष्टः पापदृष्टेः प्रभावः क तावन्मुक्तिपुर्यामवन्त्यां निवासः क ब्राह्मणकुले जन्म क वेदविद्यावैशारद्येन ब्रह्मानन्दनिमज्जनाधिकारश्च । हन्त कतिपयनिमेषमात्रं पराङ्गनागात्रं प्रति प्रेरितायाः पापदृशः प्रभावाच्च क्वाल्पं सुरपुरनिवासितासौख्यं क्वाल्पतरं नरलोके नरपालतासौख्यं क चातिदुःसहानि बिडालयोनिजन्यानि दुःखानि । ये पूर्वं मणिमयभवननिवाससुखानि कनकमयशय्याशयनसुखानि पीयूषमयमनोहराहारास्वादनसुखानि चानुबभूवुस्त एवेदानीं निर्जनवनवृक्षकोटरनिवासदुःखानि जीर्णशीर्णनिषादपर्णकुटीकोणान्तर्गतचुल्लीभस्मशयनदुःखानि बीभत्सतरवस्तुजातभक्षणदुःखानि चानुभवन्ति किमेतदल्पं दुःखस्थानम् । सूक्ष्मया दृशा विचार्यमाणे सोयं सर्वोपि परिणामः पराङ्गनाङ्गवीक्षणक्षणसलोभायाः पापदृष्टेरेव पापदृष्टिकरणपरायणान्तःकरणत्वं च दुःसङ्गतेःपरिणाम इति सुप्रसिद्धमेव । वत्स ! तेषां केनचित्सद्भाग्यलेशेन महाशयेन त्वया सहामित्रता संजाता । वनमनार्यमित्रताया आर्यामित्रतापीति लोकोक्तिर्न मृषा यतो मोचिता महाशयतया त्वया सहजया कृपया दुर्मुखमित्रतयार्पितेभ्यो नानानरकनिवासदुःखेभ्यो बिडालजन्मदुःखेभ्यश्च ते राजान एते, उचितमेवैतत्त्वादृशामुदारचरितानां । सांप्रतं चांगेश्वरावतारः शत्रुशल्यस्त्वदीयशापवशान्मणिमयतामुपग-

च्छति प्रमुक्तमणिमयशालभञ्जिकास्वरूपा शृङ्गारमञ्जरी च प्राप्नोति स्वीयं स्वरूपं ततस्तस्यै मार्जारशिशुरयमर्प्यतामित्युक्त्वा सदाशिवः कमलकोमलेन स्वकरेण गृहीत्वा मामुग्रतपसः पाणिपङ्कजेऽर्पयामास । श्रीचन्द्रमौलिकरकमलस्पर्शप्रभावादेवास्थिपञ्जरमात्रगात्रसंचरत्प्राणोप्यहं यादृग्रूपसंपत्संपन्न आसं तद्दृष्टं सर्वैरेतदाश्रमवासिभिर्युष्माभिः । मद्ग्रीवाविलग्नातिमलिनायोमयी शृङ्खलापि चञ्चच्चामीकरमयी जाता सापि दृष्टपूर्वैव युष्माकम् । संप्राप्तैतादृशाद्भुतरूपसंपदं च मां विलोक्य दयार्द्रया दृशा महेश्वरो, वत्स ! दृष्टो दुःसंगतेः प्रभावश्चिरं चिन्तनीयं चेतसा त्वया अपुण्यजनदुष्प्रवेश एतत्तपोवने प्रवेशेपि वामदेवोग्रतपसोः परिपूर्णेपि करुणावलोकने संपन्नेपि साक्षान्मद्दर्शने दुर्मुखदुःसङ्गवशात्क्षणमात्रमपि पराङ्गनागात्रप्रेक्षणप्रभावात्प्राप्ताया मार्जारयोनेर्न ते मुक्तिः संजाता । वामदेवहस्तपतनमेतत्तपोवनाभ्यागमनं मद्दर्शनं च यत्ते जातं तदपि भवन्मित्रपत्नीभ्यां शैब्यामालवीभ्यां भवदुद्धाराय भवदीयदेशे प्रतिपुरं प्रतिपत्तनं प्रतिग्रामं च स्वकीयद्रव्यव्ययेन स्थापितासु पाठशालासु कन्याशालासु च वितीर्णमनवद्यं विद्यादानं तज्जन्यागण्यपुण्यप्रभावादेव,ततस्तद्विषये त्वया तयोरेवोपकारभारः शिरसाभिवन्द्यः । किंचातः परं न दुःसङ्गोङ्गीकार्यो न महात्मनामपराधो विधेयो न पतिव्रतापराधश्च स्वप्नेपि रचनीय उग्रतपसश्चास्योपकारो न कदाचिद्विस्मरणीयो योयं युष्माभिर्जन्मत्रयपर्य्यंतं विहिताहितनिवहोपि युष्मदीयहितकरणैकपरायणो निजानन्यतुल्यप्रयत्नप्राबल्येन त्वदीयं मित्रयुग्मं दुःखमुक्तं विधायेदानीं त्वामपि दुःखमुक्तं विधातुमत्रागतोस्ति । धन्यौ खलु तदीयौ मातापितरौ धन्या तदीया निष्प्रतिमा महत्ता धन्या तदीया निष्कारणा करुणा धन्या तदीयाऽनन्यसमा क्षमा धन्या च तदीयात्युदाराचारा मनोवृत्तिर्योत्यर्थमात्मनोऽपकारपरम्पराकराणामप्युपकारपरम्पराकरणाय मनोवाक्कायकर्मभिः प्रयत्नपरम्परां रचयितुं प्रबद्धपरिकर एव जागर्ति । कतिकति न सन्ति सन्तोऽनन्तातलेऽस्मिन्नुप-

कारपरेषु नरेषूपकारपराः परमपकारपरम्पराकरणपरेष्वपि परेष्वविरतमुपकारपरम्पराकरणपरायणान्तःकरणास्तु विरला एव, ततस्तादृशां महात्मनां मनसा वचसा कर्मभिश्च भक्तिरेव विधेया न च स्वप्नेपि तादृशानामहितमाचरणीयमित्यब्रवीत् । महेश्वरमुखेन्दुमण्डलगलत्सदुपदेशसुधालहरीपानेन संजातरोमाञ्चकञ्चुकः स्रवदविरलाश्रुजलजालो गद्गदगलो न किंचिद्वक्तुं शक्तोभूवम् । यद्यप्यभून्मनसि मे दीनबन्धो दयासिन्धो चन्द्रमौले ! क्षणं क्षणार्द्धमप्येकवारं भवच्चरणस्मरणं विधाय न पुनर्जन्तुर्मरणजन्यदुःखभाजनतामुपैति जनता त्वत्प्रसादादिति निगमागमप्रसिद्धमेव, मया तु साक्षाद्भगवतश्चरणारुणार्णोजयुगलदर्शनसुखमनुभूतं निपीता च श्रवणपुटाभ्यामाभ्यां भगवद्वदनेन्दुमण्डलनिर्गलिताः सदुपदेशसुधालहर्य्यस्तथापि मदीयमन्दभाग्यान्मन्दमहिम्ना यर्हि न बिडालभावभोग्यभुक्तिमुक्तिरासादिता दीनेन गुणहीनेन पापपङ्कलीनेनामुना युष्मच्चरणपरिचारकपरमाणुना तर्हि मन्दभाग्योयं कदा त्वदाश्रित एतदसह्यदुःखमुक्तियोग्यभाग्यो भविष्यतीति भगवत एव श्रोतुमिच्छामीति प्रार्थये परमेश्वरमिति, परं तत्कालसमुच्छलदपारत्रपापारावारतरङ्गपरम्परासु निमग्नेव मे वाणी न बहिर्निर्गन्तुं शक्ताऽभूत् सकलेन्द्रियवृत्तयश्च मे क्वापि विलीनां तां वाणीमेवान्वेष्टुं गता इवान्तरुत्तीर्णाः स्वव्यापारपराङ्मुखा बभूवुः । ततः क्षणमात्रं तु मूक इवान्ध इव बधिर इव पङ्गुरिव पिशाचाविष्ट इव भूताभिभूत इव च किंकर्तव्यतामूढ आसम् । अनन्तरं किमहं शंकरचरणसरसीरुहसमीप एव संपतामि ? किं वामदेवपदयोः पतामि ? किमुग्रतपसश्चरणयोः पतामि ? किं वा प्राणानेवामून् सन्त्यजामीति लज्जया न किंचिदवेदिषं यावत्तावत्तु दयामयाशयाभ्यां वामदेवोग्रतपोभ्यां सप्रणामं, भगवन् दीनबन्धो ! दीनोयं बिडालबालः कृपया दुःखजालमुक्तो विधेयो यतः कथमिव लब्धयुष्मच्चरणदर्शनसुखस्य दुःखलेशः स्वप्नेपि संभवेदिति प्रार्थितः श्रीपरमेश्वरः ।

श्रुत्वा च तयोः प्रार्थनां, वत्सौ ! युक्तैव युवयोरुक्तिरेषा पारेपरार्द्धमपि पापान्यपाकर्तुमकम्पानुकम्पादृष्टिः शक्नोत्येव मे परमयं तु पतिव्रतायां सपापप्रेक्षणप्रक्षेपेण सतामुपेक्षणीयोऽप्रेक्षणीयो महापराधपात्रतां गतस्ततः पतिव्रताकृपावलोकलहरीमन्तरा न कदाचित्पापमुक्तो भविष्यति, तथापि युवयोरतीव सदयमस्मिन् हृदयमतो निवेद्यते निषेव्यतामनेन पतिव्रतायाश्चन्द्रप्रभायाः संनिधिसंनिधिस्ततः चन्द्रप्रभाया मुखचन्द्रमण्डलान्निष्पतन्तीं पतिव्रताधर्मविषयिणीं वचनामृतलहरीं निपीय सद्यो मुक्तबिडालभावो भूपतिकुमारभावमुपैष्यति । महादयालोरिन्दुमौलेरिमां वाचमाचम्य वामदेवोग्रतपसौ परमोयमनुग्रहः परमेश्वरस्येत्युक्त्वा साष्टाङ्गपातं प्रणामपरम्परां चक्रतुः परमेश्वराय । क्षणं विश्रम्य क्षणदारमणशिरोमणिर्ग्रहगणशिरोमणिं दिनमणिं वरुणाशावलम्बिनमालोक्य पुनरुग्रतपसं प्रोवाच । वत्स ! त्वया बिडालबालममुमादाय त्वरिततरं पूर्वपरिचितं तत्तपोवनं गन्तव्यं न विलम्बो विधेयः । सति विलम्बे सा देवकन्या स च राजकुमारमित्रं सत्यशील आत्ममित्रशत्रुशल्यवियोगानलव्याकुलोऽनलप्रवेशं करिष्यति ततस्त्वयानलप्रवेशसाहसान्निवारणीयौ तौ समर्पणीयं च ताभ्यां समाश्वासनपूर्वं धैर्यमुपदेष्टव्यं चाशेषापच्चयलयनिदानमखिलदानप्रधानमनवद्यहृद्यविद्यादानविधानम् । इत्युक्त्वा विरते श्रीपशुपतौ त्वरितमुग्रतपाः प्रणम्य परमेश्वरं यथाज्ञा प्रभोरित्युक्त्वाचोपहसितसमीरवेगेन वेगेन पर्वतस्यास्य सामीप्यमाससाद । यथा महेशादेशमुपदिश्य देवकन्यायै सत्यशीलाय विद्यादानविधानं समर्प्य च सत्यशीलकरकमले स महाभागो यथागतमगच्छत् । अहं सदाशिवपदावलोकलब्धभाग्योदयो युष्माकं सामीप्यमुपसेवन् सौशील्यवसतीनां महासतीनां दयावलोकलहरीभिरनुक्षणं क्षीयमाणपापपङ्क इदानीं महासत्याश्चन्द्रप्रभाया मुखकमलाद्गलितायां सदुपदेशसुधासरस्वत्यां स्नात्वा मुक्तबिडालभाव ईदृग्रूपसंपत्पात्रतामुपगतोस्मि, तन्निःशङ्कमहमस्मि चित्र-

सेनो नाम कलिङ्गानां राजेति भवतीभिरवगन्तव्यम् । ये येऽत्रभवतीभिर्भगवतीभिर्मयि रचिता उपकारस्तेषां तेषामनृणोहं जन्मसहस्रैरपि नास्मि भवितुं शक्त इत्युक्त्वा चन्द्रप्रभाचरणयोरग्रे निपपात । एतस्मिन् व्यतिकरे त्वद्भुताद्भुतवृत्तान्तश्रवणसमुत्पन्नाश्चर्यानन्दनिमग्नमानसतया न कश्चित्किमपि वक्तुं प्राभवत् । केवलं चन्द्रप्रभा त्वरितमुत्थाय, प्रियबंधो चित्रसेन! दिष्ट्या मुक्तोऽमुष्मान्महाकष्टाद्वत्सः । सांप्रतं भवानिव भवन्मित्रेपि दुःखमुक्तो भविष्यत एवेति नः पुनरुत्पद्यते दृढो विश्वासः । धन्यः खलु वत्सो येन श्रीशशाङ्कशिरोमणेः साक्षाद्दर्शनसुखमनुभूतं । किंचाद्भुताद्भुतवृत्तान्तान्धकारे भ्रमतामस्माकं सकलवृत्तान्तनिवेदनेन सर्वोपि भ्रमो निरस्तो वत्सेन । नैनमुपकारं यावज्जीवं विस्मरिष्याम इत्यवदत् । श्रुत्वा च मातश्चन्द्रप्रभे! सर्वेभ्य एतेभ्यो मह्यं च भगवत्यैव महदुपकृतं तद्विषयेधिकं वक्तुं न शक्ता रसना ममेत्युक्त्वा भूमावेवोपविशन्तं प्रियंवदा बलादासनपरिग्रहं कारयामास । स दिवसः सा च रात्रिः सर्वेषां परमानन्दकन्दवर्षिणी बभूव ।

अन्येद्युश्चन्द्रप्रभा भद्रमुख! विद्यानिधिप्रमुखा अमी विद्यार्थिनः स्वकीयसद्गुरुसत्यशीलवियोगानलव्यग्रतया दीनानाथदशामनुभवन्ति ततस्तेषां गुरुपदं वत्सेनातःप्रभृति भूषणीयमित्युक्त्वा अयि पुत्रनिर्विशेषा मे शिष्याः! महाशयोयं राजकुमारो रूपान्तरं युष्मद्गुरोः सत्यशीलस्येति मत्वा तन्निर्विशेषं सेवनीय इति तन्निकटस्थितान् विद्यार्थिनश्चाज्ञापयामास सविनयं सानन्दं सपरितोषं च विद्यानिधिप्रमुखैर्विद्यार्थिभिरङ्गीकृतायां चन्द्रप्रभायां राजकुमारोपि प्रणयप्रणम्र उत्थाय देवि देवकन्ये! मातश्चन्द्रप्रभे! प्रियस्वसः प्रियंवदे! चाद्यप्रभृति यथाचन्द्रप्रभानिदेशं पुण्यपाठशालायामेव वसन् विद्यार्थिभ्यो विद्यादानमहमहरहरविरतं वितरिष्यामि परमेण प्रेम्णेत्युक्त्वा प्रणम्य च प्रणम्यान् सर्वान् सह विद्यार्थिसहस्रेण बहिर्निश्चक्राम विद्यालयात् । आविद्यालया-

ङ्गणमनुप्रस्थिताश्चन्द्रप्रभाप्रियंवदादेवकन्याश्चालमलमत्यायासेनेत्युक्त्वा राजकुमारेण सप्रणामं प्रणयान्निवारितास्ताः पुनर्विद्यालयमुपेत्य यथापूर्वमपूर्वया प्रीत्या पूर्वपुण्ययोगाच्छिष्यतां प्राप्ता मुनिकन्या अध्यापयामासुः । स राजकुमारोपि सकलसद्गुणपात्रैश्छात्रैः सह सहसा समुपेत्य विशालां पाठशालां परितोषपीयूषपूर्णस्वान्तः स्वान्तेवासिनः पाठनीयमविरतं पाठयामास । अभिनवराजकुमारसमागमानन्दसंदोहमग्नमानसा विद्यानिधिप्रमुखा विद्यार्थिनस्तु स्वकीयसद्गुरुश्रुतशीलस्वरूपान्तरमिव तं मन्वानाः परमेणादरेण निर्व्यलीकया भक्त्या निष्प्रतिमेन प्रेम्णा चैनं पर्यचरन् । सोपि स्वौरसनिर्विशेषवात्सल्येन तेभ्यः सर्वेभ्यः प्रतिदिनं हृद्या निरवद्याः विद्याः समुपदिदेश, सकलाः कलाः समशिक्षयत् , किमप्यवर्ण्यं नैपुण्यं च समर्पयामास । सभासु चोत्तमोपदेशपीयूषवर्षीणि प्रतिक्षणोत्पादितश्रवणकौतुकानि विचित्ररचनाचातुरीचित्रीकृतश्रोतृसमूहानि सरसानि सालंकाराणि सरलानि मृदुलमञ्जुलशब्दगुम्फितानि च भाषणानि श्रावयामास, प्रतिक्षणं सौशील्यमहिमानमुदाहरणसहस्रनिदर्शनैर्दर्शयामास, अविरतं सत्यस्य समस्तशास्त्रस्तुत्यतां प्रकाशयामास, अनुनिमेषोन्मेषमहिंसायाः श्रेयस्करतरतां प्रतिपादयामास, सततमेकपत्नीव्रतस्य व्रतचक्रचक्रवर्तितां विशदयांचकार, संततमस्तेयस्योपादेयतां वर्णयामास. मुहुर्मुहुः परिग्रहस्याग्राह्यतां ग्राहयामास, निरंतरमार्जवस्योपार्जनीयतां सौहार्दस्याहेयतां सौजन्यस्य धन्यतां दयाया उदयनिदानतां औदार्यस्य वर्यतां धैर्यस्य धार्यतां कामस्य वामतां रोषस्य सदोषतां लोभस्य निःशोभतां मदस्याविनयास्पदतां मोहस्य विषमोहविलक्षणतां मत्सरस्य सर्वाभ्युदयप्रतिकूलतां च प्रमाणसहस्रैरुपदेशेषु प्रकाशयामास । एवममन्दानन्दसंदोहमन्वहमनुभवतस्तस्य व्यतीयुर्वासराः । न तस्यकश्चिद्वासरः कश्चित्प्रहरः कश्चिन्मुहूर्तः काचिद्घटिका काचित्कला कश्चिल्लवः कश्चित्क्षणो वा

सद्गुपदेशसमर्पणशून्यो व्यतीयाय विद्यार्थिनस्तु तैस्तैरुपदेशैर्विद्वत्तमा विवेकवत्तमा विनयवत्तमाश्च बभूवुर्विस्मृतिमिवोपययुश्चाविस्मार्यश्रुतशीलविरहासह्यवेदनायाः । अथान्येद्युर्भगवति द्युमणौ लोकेभ्य उदयास्तक्रमनियममवार्यमात्मीयया दशयादर्शयतीव पश्चिमाशामालंबमाने सज्जनप्रीतिष्विवानुक्षणं वर्धमानासु च्छायासु अपहाय तरुतलच्छायां यथाभिमतं दिगन्तरं प्रति प्रस्थितेषु पान्थेषु शिथिलातपतया संचारक्षमतामाप्तेषु वनमार्गेषु सायंसमयशिवसमर्हणार्हाणि फलानि पुष्पाणि दलानि चाहर्तुं परितः पर्यटमानेषु मुनिबटुकेषु पुण्यसलिलानयनाय तपोवनतरङ्गिणीतीरमभिप्रस्थितासु पुण्यदर्शनासु पवित्रचरित्रासु च मुनिपत्नीषु ह्यानवद्यविद्याध्ययनतत्परेभ्यो निर्मलतरसद्गुणपात्रेभ्यः सद्विद्याभ्यासश्रमक्षमगात्रेभ्यश्छात्रेभ्यः समस्तप्रशस्तदानगणरत्नायमानमुत्तमोत्तमं विद्यादानमर्पयित्वा श्रमापनयनाय शीतलतरोपवनतरुतलेषु धीरसमीरमासेवमानेषु मुनिजनेषु विसर्ज्य विद्यार्थिनः सर्वान् यथाभिमतग्रन्थावलोकनविनोदाय स्वयं राजकुमारः पुण्यतमाश्रमसरित्परिसरे परिभ्रमन् परिभ्रमन्तमितस्ततोतिरमणीयतमस्वरूपं नीलमणिमयमिव पृष्ठभागं विषाणद्वयं खुरचतुष्टयं नासापुटं च वसानं स्फटिकमणिमयमिवोदरभागं पार्श्वद्वयं चोद्वहन्तम् दृशा चातिदीर्घया नलिनदृशां दृशामपि सौन्दर्यदर्पमपहरन्तं मृगबालकमवलोकयांचकार । तद्दर्शनमात्रापहृतचित्तस्तद्ग्रहणाग्रहग्रहग्रस्तहृदयो जानकीहृदयदयित इव तमनुदुद्राव मृगशावकं स कुमारः । तेनानुद्रुतो मृगबालकस्तु भयचकितलोचनः प्लवंगम इव प्लवमानस्तमेवाश्रमप्रदेशं प्रविवेश यत्रेन्द्रनीलमणिमयमहेश्वरमन्दिरसंनिधौ शत्रुशल्यश्रुतशीलाविन्द्रनीलमणिमयमूर्तितामुपगतौ स्वकृतकर्मपरिपाकमनुभवन्तावविमृष्यकारिताविजयस्तंभाविव पुरुषाकारावतिष्ठताम् । प्रविष्टमात्र एव तत्र विद्योदय इव सव्यसनस्य विजयाभ्युदय इव सपरद्रोहस्य संपच्चय इव सदुर्नयस्य सद्गुणगण इव सलो-

भस्य हिताहितविचार इव सकामस्य कृत्याकृत्यविचार इव सक्रोधस्य सत्यासत्यविचार इव समोहस्य विनय इव समदस्य हृदयाह्लाद इव समत्सरस्य कुशलतालाभ इव च सदुःसङ्गस्य तस्य पुरतो नातिदूरे दृश्यमानोपि प्रपलाय्याकस्मात्क्वापि विलीनः स कृष्णसारशावको न पुनर्लोचनगोचरतामगच्छत् । राजकुमारस्यापि तदन्वेषणप्रयासपराङ्मुखी दृष्टिरयोमयी शलाकेवायस्कान्तमणौ शत्रुशल्यश्रुतशीलयोरिन्द्रनीलमणिमये प्रतिमाद्वये विलग्ना नान्यत्र गन्तुमशकत् । मुहुर्मुहुस्तदेवप्रतिमाद्वयं साश्चर्यानन्दं विलोकयन् कीलित इव मुद्रित इव स्तम्भित इव ग्रहग्रहीत इव भूताभिभूत इव पिशाचाविष्ट इव च क्षणं मुक्तान्यव्यापारो निर्निमेषदृष्टिरतिष्ठत्, मनस्यकरोच्च बहूपकृतं मामिममतिरमणीयानामग्रे गणनीयं दर्शनीयानामवधिभूतं स्पृहणीयानामपश्चिमं प्रदेशं प्रत्याकर्षता तेन कृष्णसारशावकेन । नूनमिमावेवाङ्गवङ्गेश्वरौ मे प्राणप्रियौ सखायौ चन्द्रप्रभाप्रियंवदाहृदयदयितौ शत्रुशल्यश्रुतशीलसंज्ञौ राजकुमारप्रधानकुमारौ तदतिचिरकाललब्धदर्शनयोरनयोरग्रे विधाय किमपि भाषणं कृतार्थयाम्यात्मानं ममेति । अनन्तरं च प्रियमित्रे ! मे न युवयोः किमप्यविदितं तथापि वक्तृत्वप्रख्यातानां वक्तृशिरोमणीनामपि वक्तृत्वशक्तिर्नस्फुरत्युत्तमतमश्रोतृजनविरहे तदत्र श्रोतृशिरोमणी युवामिदानीमुपलभ्य मदनुभूतविषयवर्णने यथास्वमति वाक्चापलं कर्तुमिच्छामि तत्रावधानदानमहानुग्रहं कर्तुं महाशयशिरोमणी युवां न पराङ्मुखतां भजिष्यथ इत्याशासे । निखिलानामश्रेयसां पराकाष्ठा दुःसंगतिर्निखिलानां श्रेयसां पराकाष्ठा च सत्संगतिरित्यनुभूतमनुजनुर्मया युवाभ्यां च । दुःसंगतिर्हि वध्यशिला सर्वविद्यानां महामारी सर्वकलानामुच्चाटनविद्या सद्गुणानां वशीकरणविद्या दुर्गुणानामाकर्षणविद्या दुर्नयानां स्तम्भनविद्या दुरभिमानस्तम्भानामध्ययनशाला दुराचाराणां ज्वलनज्वाला सन्मतिबाललतानां हिमसंहतिः सद्विचारसरसीरुहाणामकालकालमेघमाला कु-

लीनताकलहंसीनाम् । न खलु लोकत्रयेपि तत्पश्यामि दुःखं न यत्संपाद्यते दुःसंगत्या । शतशो देवाः सहस्रशो दानवा लक्षशो रक्षोयक्षोरगाप्सरोगन्धर्वाः कोटिशो मानवाश्च दुःसंगत्या दुर्दशाविवशाः कृता इति प्रतिपुराणेतिहासं-सुप्रसिद्धमेव । दुर्जनसंगत्यानेके विद्वांसोपि मूर्खोपहास्यास्पदतामुपगता अनेके-विवेकिनोप्यविवेकिनामप्युपालम्भपात्रतां याता अनेके विनयवन्तोऽप्यविनयनि-लयानामप्यग्रेसरतां प्रयाता अनेके कुलीना अप्यकुलीनगणनागणनीयतामुप-याताः । अनया हि दुःसंगत्या कतिकति निपुणा अपि निपुणताया उत्तमा अप्यु-त्तमतायाः प्रामाणिका अपि प्रामाणिकताया धीरा अपि धीरताया महात्मानोपि महात्मतायास्तपस्विनोपि तपस्वितायाः सुशीला अपि सुशीलतायाः साधवोपि साधुतायाः सुखिनोपि सुखसंपदः प्रतिष्ठावन्तोपि प्रतिष्ठाया राजानोपि राजता-या महाराजा अपि महाराजताया राजाधिराजा अपि राजाधिराजतायास्त्वरितं परिभ्रंशिता नास्मिन्निलावलये विलोक्यन्ते । मनुजनुषां मनोनिकुञ्जान् यदा यदा दुःसङ्गदवानलज्वालामाला विकराला व्याकुलयन्ति तदा तदा निर्मूला भवन्त्यामूलतः परिम्लाननिखिलाङ्गलावण्याः सुशीलतासरलतासुजनतादयालुता-सुज्ञतागुणज्ञताबाललताः परिशुष्यति सत्यामृतसरः परिदह्यन्ते सौहार्दसंतोषमा-र्दवोपवनभवनानि त्रासतरला उड्डीयोड्डीय यथाभिलषितानि दिगन्तराणि प्रयान्ति सद्गुणगणपवित्रपतत्रिणः सद्योतिशुष्कतां बिभर्ति सभ्यताकदलीवनं प्रणाश-मनुभवन्ति चानुवेलं नम्रतापुष्पलताः । दुःसङ्गतिपिशाच्यावेशविवशाशया नै-हिकं सुखमनुभवन्ति नामुष्मिकं वा, नैहिकं हितमवगच्छन्ति नामुष्मिकं वा, नैहिकं श्रेयः कुर्वन्ति नामुष्मिकं वा, न स्वीयान् पश्यंति न परकीयान् वा, न सत्यं जानंते नासत्यं वा, न कृत्यं विदन्ति नाकृत्यं वा, न हेयमवधारयन्ति नोपादेयं वा, नैतावदेव यानि यानि दुःखानि यानि यानि पापानि यानि यानि दुर्लक्षणानि यानि यानि च दुराचरणानि सन्ति लोके तानि तानि

सर्वाणि तेषां हृदयालयेषु परितः प्रसरन्ति । तत एव कल्याणाभिलाषिणा न स्वप्नेपि दुःसंगतिपिशाची परिशीलनीया यतः सा विषवल्लरीव दूरस्थानपि नानाविधानर्थपात्रतामुपनयति किंपुनस्तदाश्रयकरान्नरानसंख्यानर्थनिधानतां नयतीति वक्तव्यम् । यथैकत एवं दुःसंगतेर्दुष्टतमः परिणामः प्रसिद्ध एव त्रिलोक्यां तथैवान्यतः सत्संगतेरुत्तमतमः परिणामोपि प्रसिद्धतम एव प्रस्फुरति सर्वत्र । तथाहि । सर्वाभीष्टसमर्पणप्रणयिन्याः सत्संगतिदेव्या महिमा न केनापि वर्णयितुं पार्यते । सत्संगतिर्हि जन्मभूमिः सद्विद्याकल्पलतानां रोहणाचलाचला सद्गुणरत्नानां वशीकरणविद्या सत्कलाकुलविलासिनीनामुच्चाटनविद्या दुर्गुणपिशाचानामाकर्षणविद्या सर्वविनयानां स्तम्भनविद्या कामादिवैरिवर्गस्याध्ययनशाला सद्विचाराणां दिव्यौषधिः सद्बुद्धिबाललतानां सुरापगा कुलीनताकलहंसीनां । न खलु भुवनत्रयेपि तत्सुखं विलोकयामि न यत्संगत्या संपाद्यते । अनेके देवा दानवा मानवा रक्षोयक्षोरगाप्सरोगन्धर्वविद्याधरचारणाः सत्संगत्यैवोत्तमतमपदभाजः संबभूवुरिति प्रतिपुराणेतिहासं प्रसिद्धमेव । कतिकति जगत्यस्मिन्नविद्वांसोपि विद्वन्मान्या विनयविधुरा अपि विनयधुरीणा अकुलीना अपि कुलीना विकला अपि सकला अधमा अप्युत्तमा अधीरा अपि धीरा निर्दया अपि दयार्द्रा निर्लज्जा अपि सलज्जा निष्प्रतिष्ठा अपि सप्रतिष्ठा दुराचरणा अपि सदाचरणा उद्धता अपि नम्राः समदा अप्यमदाः क्रूरा अप्यक्रूराः परुषहृदया अपि मृदुलहृदया दुर्जना अपि सज्जनाः कुटिला अपि सरला रङ्करङ्का अपि दीनदीना अपि राजानो महाराजा राजाधिराजाश्च नानया सत्संगत्या स्वकीयाप्रतिमप्रभावेण निर्मिताः । यदायदा चास्मन्मनोनिकुञ्जेषु सत्संगतिसुधावृष्टिर्विजृंभते तदातदा फलिता भवन्ति प्रफुल्लितसर्वाङ्गाः सुशीलतासरलतासज्जनतादयालुताविद्वत्तासभ्यतार्यताकल्पलताः परिपूर्यंते सत्यामृतसरांसि

मनोनयनानन्दतामुद्वहन्ति संतोषसौहार्दमार्दवार्जवलतामण्डपाः परितो विहरन्ति सानन्दसंदोहं सद्गुणगणपवित्रपतत्रिणः पुष्यन्ति सभ्यताकदल्यः परितः प्रोल्लसन्ति प्रणयपुष्पप्रकरनताश्च नम्रतापुष्पलताः । सत्संगतिकामदुघामहिम्नि न कश्चिदभिज्ञोनभिज्ञस्तस्या लाभो हि नाल्पानां पुण्यानां परिणामः । सत्संगत्यैव जनो जानाति हिताहितसत्यासत्यकृत्याकृत्यहेयोपादेयानि संपादयत्यैहिकामुष्मिकश्रेयांसि करगताः करोति च चतुर्विधा अपि मोक्षलक्ष्मीः । नैतावदेव यानियानि सुखानि यानियानि पुण्यानि यानियानि सल्लक्षणानि यानियानि च सदाचरणानि लोकेषु श्रूयंते तानितानि सर्वाणि सत्संगतिस्वर्गापगावगाहविमलाशयानां महाशयानां मनोमन्दिरेषु समुल्लसन्ति तत एव श्रेयोभिलाषिणा जनेन सत्संगतिरेव सेवनीया सत्संगतिरेव बलं सत्संगतिरेव गतिः सत्संगतिरेव मतिः सत्संगतिरेव सर्वस्वं चेति मन्तव्यम् । कतिकति सद्गुणाः कतिकति लाभाः कतिकति चाभ्युदया विलसंति सत्संगत्यामिति नैकयानया रसनया वक्तुं शक्तोहम् । किं बहुना सर्वेषां सद्गुणानां सर्वासां सद्विद्यानां सर्वासां संपदां सर्वेषामभ्युदयानां सर्वेषामानंदानां सर्वेषां सुकृतानां सर्वेषां स्नेहानां सर्वेषां श्रेयसां च मूलं सत्संगतिः सत्संगतिरेवास्तीति निर्विवादमिति चरमवचो विराम एव दिनमणिरस्ताचलमस्तालंकारतामगच्छत् । स राजकुमारोपि शापप्रभावादिंद्रनीलमणिमयतामच्छत् । विद्यानिधिप्रभृतयो विद्यार्थिनः स्नानसन्ध्याशिवार्चनादीनि सायंसमयकृत्यानि परिसमाप्य निजसद्गुरो राजकुमारस्य पादाभिवन्दनाय तन्निवासपर्णकुटीं प्रविष्टाः कुमाररत्नरहितत्वान्निस्तेजस्तमां तां पर्णकुटीमुत्तमतमग्राहकविरहादौदास्यमग्नानीव पुस्तकानि सदासदुपयोगकर्तृकुमारविरहान्मूर्च्छितामिव मसीपात्रसहितां लेखिनीं निजकर्तारमन्वेष्टुमिवेतस्ततः परिभ्रमन्तीव प्रारंभितापूर्णकवितापत्राणि राजकुमारविरहदुःखाद्गृहीतमौनामिव कोणान्तर्विलीनां वीणां कुमारविरहदुः-

खाद्विवर्णमिवभूमिपतितं तदीयकरकमलालिखितमङ्गवङ्गनरेन्द्रयोश्चित्रपटं दीपमपि तं कुलदीपमन्तरा दुःखात्कम्पमानमप्रकाशं च विलोकयामासुः । विलोक्यैव तादृशीं गुरुचरणशून्यायास्तस्याः पर्णकुट्याः स्थितिं सशंकसभयहृदया अपि विद्यार्थिनो धैर्यमालम्ब्य प्रतितरङ्गिणीतीरं प्रतितरुतलं प्रतिनिकुञ्जपुञ्जं प्रतिशिखरिशिखरं च प्रयत्नाद्राजकुमारमन्वेषयामासुः । भूयोभूयो निपुणतरमन्विष्याप्यप्राप्ततद्दर्शना दुःखितहृदया निवेदयामासुश्चन्द्रप्रभायै वृत्तान्तमेतत् । तद्वृत्तांतश्रवणादेव तस्य नीलमणिमयभावं शङ्कमाना चन्द्रप्रभा दुःखान्मूर्च्छामगच्छत् । मुहूर्तात्प्राप्तसंज्ञा च वत्सा मन्ये प्रतिदिनं निवारितोऽप्यस्माभिरिदानीं स युष्मद्गुरुः स्वकीयसन्मित्रसामीप्यमुपेत्य तत्साम्यतामुपगतो भविष्यति । कथमेतावन्मात्रमपि सुखं विषमेस्मिन् समये वामो विधिरस्माकं सहेत । हा धिङ् मे जन्म जीवितं च याहमीदृशानि दुःखान्यनुभवन्त्यपि जीवामि । हा गुणरत्नरोहणगिरे! हा सौशील्यसागर! हा सत्कविताकल्पनकल्पतरो कुमार! निराधारामनाथां चेमां स्वीयां धर्मस्वसारं वृद्धान् दुःखितांश्च गुरुजनान् दीनान् विद्यार्थिनश्चैकपद एव परित्यज्य गच्छतस्ते हृदये दयापि नायाति? किमिदमत्रभवतो भवतः कुलस्यानुकूलं शीलस्यानुरूपं सद्गुणानामप्रतिकूलं निसर्गसिद्धस्नेहस्य चार्हम् । अलमथवेदानीमनर्थेन विलापपल्लवितेन, वरमिदानीं प्रतिमासीयमुपेत्यासायंसमयं च तत्रैव स्थित्वा नीलमणिमयत्वप्राप्तिरेवास्माकं न पुनर्जीवनम् । तद्विद्यानिधिप्रमुखा विद्यार्थिनः! सांप्रतमेषां गुरुजनानां सपर्या मया युष्मभ्यं समर्प्यते ततः सा प्रयत्नेन विधेया । किं ये ये युष्मदपेक्षयाल्पाध्ययनवंतः संति विद्यार्थिनस्तेते युष्माभिः स्नेहादध्यापनीयाः । अयि विद्यावल्लरीकविताकल्पलताप्रमुखाः प्रियपुत्र्यो! मे कन्याशालेयं भवतीभ्य इदानीं समर्प्यते सत्कुलकन्याभ्यो विद्यावितरणे न वत्साभिः प्रमदितव्यं गुरुजनेभ्यश्च नीलमणिमयतामुपगतास्वस्मासु निवे-

द्यास्मदीयमखिलं वृत्तान्तं धैर्यमर्पणीयं । किंचामी बालकदंबा बालरसाला बालवकुलाश्चौरसनिर्विशेषं संभावनीयाः । पुस्तकालयोयं न शून्यो विधेयो मद्रचितमपूर्णमपर्णापुण्योदयं नाटकं पूर्णं विधाय तालपत्रेषु विलिख्य च भवतीभिः प्रतिमुनिजनाश्रममर्पणीयं चेति चरमाशीर्मालार्पणपूर्वमभ्यर्थनेत्युक्त्वोत्थाय स्वकीयं मणिमयं शिवलिङ्गं सप्रार्थनं प्रणम्य च तामेव पर्वतदरीं प्रति चचाल । देवकन्याभ्यां सहिता प्रियंवदापि तामेवानुससार । निष्फलतामुपगतेषु साश्रुधारासारसंपातं विद्यार्थिभिः कन्याभिश्च रचितेषु प्रार्थनासहस्रेषु धर्ममातृभिराभिराश्रितः सन्मार्गोयमस्माभिरपि सेवनीय इति निश्चित्य विद्यार्थिनः कन्याश्च सहैव गन्तुं प्रवृत्ताः । क्षणेन सर्वेपि ते समासेदुर्गिरिदरीद्वारं यावत्तावत्समासन्ननिशीथत्वाच्चन्द्रोदयोभूत् । चन्द्रोदयप्रभावात्परितो निरस्तेप्यन्धकारे न तासामान्तरमन्धकारमपससार । प्रियजनवियोगदुःखात्तासां तु सर्वा दिशोप्यन्धकारीभूता अभूवन् । अथ चन्द्रप्रभा यावत्प्रविशति गिरिगुहोदरद्वारं तावदेका काचिद्देवकन्या तस्माद्गिरिगुहोदराद्बहिर्निःससार । दृष्ट्वैव तां सर्वेषां चेतांसि यावत्किंचित्समाश्वस्तानि तावत्सापि भगवत्योत्रभवतीनां भवतीनां मध्ये विराजते कापि चन्द्रप्रभाभिधाना राजकुमारीत्यपृच्छत् । श्रुत्वैवैतान्यक्षराणि देवि ! यां पृच्छसि सैवाहम् ।कुतो देव्या समागतं किमाज्ञाप्यते चायं जन इति श्रोतुमुत्कण्ठते मनो ममेत्यवदच्चन्द्रप्रभा । चन्द्रप्रभोदितमेतदाकर्ण्य सा देवकन्या प्रियस्वसारो मे ! सायंसमयेहमासमेकस्मिन्स्फटिकमणिमये प्रदेशे परं तत्र मनुष्याभावात्तत्परित्यज्य प्राविशं तिमिरमयीमतिगभीरां गिरिदरीम् । क्षणात्समुत्तीर्णगिरिदर्युदरान्धकारया मया विलोकितः कोपि पद्मरागमयः सकलः प्रदेशः । सोपि देवदानवमानवमुन्याद्यनाश्रितो न मे मनसि निवासरुचिमुत्पादयामास । ततः परामपि गिरिगुहां प्राविशम् । समुल्लङ्घिततदीयतिमिरौघा चाहं लोचनगोचरमकरवं महानीलमणीयमखिलं प्रदेशं । तत्राप्येकस्मिन्निन्द्रनीलमणिमये प्रदेशे

श्रीचन्द्रचूडामणेर्मणिमयं मन्दिरमपश्यम् । गत्वा च तत्र प्रणतप्रणतपालबाल-मृगाङ्कमौलिपादपद्मया मया तत्समीप एव चक्षुर्लक्ष्यतां नीतं चक्षुश्चमत्कारकरं नीलमणिमयं मूर्तित्रयम् । विस्मयविस्मृतनिमेषा चाहं यावत्तदेव मूर्तित्रयं नयन्ती नयनयुगलाङ्गणातिथितां स्थिता तावत्समागतः कश्चिद्भव्यो दिव्यश्च मुनिर्मामवोचत् । वत्से ! नात्र वत्सया स्थेयं । गृहाणेमां पत्रिकाम् । समर्पणीयेयं राजकुमार्यै चन्द्रप्रभायै । त्वयापि तस्या एव समीपे स्थेयम् । महानुभावस्य तस्य मुनिवरस्याज्ञयाहमत्रागतास्मि तदियं त्वदीयकरकमलान्तराले मरालबालतामनुभवतु पत्रिकेत्युक्त्वा चन्द्रप्रभायाः करकमले पत्रिकां मुमोच । चन्द्रप्रभाप्युन्मोच्य पत्रिकामुद्रां सर्वाभ्यः श्रावयामास तदन्तर्गतं श्लोकत्रयम् ।

वत्से चन्द्रप्रभे वत्से देवकन्ये प्रियस्वसः । प्रियंवदे हृदा धार्यं धैर्यस्थैर्यमनुक्षणम् ॥ भुक्तं बहुतरं दुःखं स्वल्पं मोक्तव्यमस्ति वः ॥ मा मा मुञ्चत तद्धैर्यं मा कुरुध्वं च साहसम् ॥ विद्यादानमहामूल्यचिन्तामणिरहर्निशम् । निषेव्यतां स वः सर्वं चिन्तितं पूरयिष्यति ॥

इति पत्रिकान्तर्गतवाक्यावलोकनोत्तरक्षणे चन्द्रप्रभायाः प्राणपरित्यागवेगः किंचिन्मन्दतामगच्छत् संतुष्टं च किंचित्स्वान्तम् । तदनु विद्यार्थिभिः कन्याभिश्च सप्रणामसहस्रार्पणं कृताभिः प्रार्थनाभिर्निर्मूलीकृतप्राणपरित्यागवेगा च सा दीर्घमुष्णं च निःश्वस्य संमार्ज्य च वल्कलाञ्चलेन बाष्पसलिलाकुलं लोचनयुगलं प्रावोचत् । देवि ! यदीदानीं भवत्या एतदागमनं नाभविष्यत्तर्हि सर्वेषामस्माकं मध्यान्न कोपि जीवितदुःखमिदमन्वभविष्यत् । सत्यमतिलज्जाकरमेतज्जीवितमेव नः कृतघ्नतां नीचतां कठिनस्वान्ततां च निवेदयति, परं क उपायः का गतिः किं बलं च । विचित्रैव भगवती भवितव्यता । यद्यपीत आश्रमंप्रति गन्तुं न चरणौ चलतो न चेतश्चोत्सहते तथापि गुरुजनानां सेवा भवत्यानीता मुनिवराज्ञा च मामाश्रमं प्रति गन्तुमाकर्षति । चन्द्रप्रभा-

वचनमेतदाकर्ण्य प्रावोचन्नवीना देवकन्या । मातश्चन्द्रप्रभे! युक्तैवोक्तिर्भगवत्याः । सह्यं खलु मरणजन्यं दुःखं परमसह्यतरं प्रियजनवियोगानलज्वालानुभवदुःखम् । नीलमणिमयप्रदेशे तस्मिन् या मया चरमा नीलमणिमयी प्रतिमा विलोकिता तस्यामेव मन्मनोवृत्तिरयस्कान्तमणावयःशलाकेव विलीना ततो न तत्प्रदेशादन्यत्र गन्तुं ममेच्छाभूत्, परमकस्मादागतेन तेन महात्मना मुनिराजेन, वत्से! न क्षणमपि स्थातव्यमत्र वत्सया, किंतु पुरःपातिना मार्गेण बहिर्गन्तव्यमित्याज्ञप्तम् । सा च तदाज्ञा ममातीवारुचिकराभूत्तथापि मुनिवरप्रभावान्न तद्विरुद्धमेकमप्यक्षरं वक्तुं शक्ताभवम् । केवलं मुकुलितकरकमलयुगला यथाज्ञा भगवतस्तपस्विचक्रचक्रवर्तिन इत्येतावन्मात्रमेवाब्रुवं परं मदीयं हृदयं नयनद्वयं च तस्यामेव विलीनमभूत् । ततः स महात्मा स्वतपःप्रभावेन मन्मनोभिप्रायं विज्ञाय वत्से! त्वदीयं हृदयं नयनद्वयं च परमेण प्रेम्णा यस्यां प्रतिमायां विलीनं न यस्याः सकाशाद्दूरं गन्तुं त्वमाकाङ्क्षसे सा प्रतिमा कस्यास्ति कथं तस्येयं दशा जाता कदा केन साधनेन च सा जाड्यमुक्ता चैतन्ययुक्ता भवेदेतत्सर्वं त्व चन्द्रप्रभासहवासादेव ज्ञास्यसि । चन्द्रप्रभोपदिष्टपुण्याचरणेन ते मनोरथः सकलः सफलो भविष्यति । केवलमेतत्प्रतिमावलोकनेन न किंचित्फलं ते भविष्यति । त्वदीयहितायैव मया चन्द्रप्रभासामीप्यसेवनमुपदिष्टमित्यशङ्कं विज्ञायास्मात्स्थलात्त्वरिततरं निर्गम्यतामित्यब्रवीत् । ततोऽहं प्रणम्य शङ्करं प्रतिमात्रयं तपस्विवर्यं च तं युष्माकं समीपमुपयाता । ज्ञातुमिच्छामि तासां प्रतिमानां वृत्तान्तजालं केन पुण्यकर्मणा च ता मणिमयतामुक्ताश्चैतन्ययुक्ता भविष्यन्ति चेत्यतो निखिलनिवेदनानुग्रहं करोतु भवतीत्युक्त्वोक्तिविराममकरोत् । श्रुत्वैव तस्या उक्तिं चन्द्रप्रभायाः प्रियंवदाया देवकन्ययोश्च राजकुमारोक्तमखिलं पूर्वजनुर्वृत्तान्तं स्मृतिपथारूढमभूत् । ततः सोत्साह-

मुत्थायाहो सेयं नः प्रियसखी कल्हारकलिका शापमुक्तेत्युक्त्वा तां सर्वास्तस्याः सहर्षाश्रुपातमालिङ्गनं चक्रुः । मन्दीभूते च शनैःशनैः परस्परप्रेमालिङ्गनप्रसंगे चन्द्रप्रभा, प्रियसखि! यद्वृत्तान्तं विज्ञातुमुत्कण्ठते स्वान्तं ते तदतिविस्तीर्णे निवृत्तिनिवेदनीयं चास्ति प्रभातप्रायेयं त्रियामा प्रत्यासीदति च गुरुजनानां स्नानसमयस्तत्सांप्रतं गत्वाश्रमपदं कृत्वा गुरुजनसपर्यां सर्वं सविस्तरं प्रियसख्यै श्रावयिष्यामीत्यवदत् । चन्द्रप्रभोक्तिश्रवणोत्तरक्षण एव यथा युष्मदिच्छेत्युक्त्वा सर्वा आश्रममेवागच्छन् । तत्र परिसमाप्य गुरुजनसपर्यां विधाय प्राभातिकविधेयं समर्च्य सुरासुरसमर्च्यमिन्दुशेखरं शंकरं समुपेत्य च विद्यालयं तत्र चन्द्रप्रभया नवीनदेवकन्यायै शत्रुशल्यस्य नीलमणिमयताप्राप्तितः प्रारभ्य नवीनदेवकन्यागमनान्तं निखिलं वृत्तान्तं निवेद्य देवि! सर्वेषामाप्तजनानां वाक्यैर्यावधि प्रतिक्षणमागतेनानुभवेन च विद्यादानमेवाखिलश्रेयोनिदानमिति निश्चलो निश्चयश्चेतसि नः संजातस्ततो मनोवाक्कायकर्मभिर्विद्यादानमेव कुर्महे वयं भवत्यापि तदेव कर्तव्यं येन सर्वेषामस्माकं सकला अभिलाषाः सफला भविष्यन्तीति विद्यावितरणमेव शरणं न इत्युपदिष्टं तस्यै । ततः सापि तदीयोपदेशानुसारेण मुनिकन्याभ्यो मुनिपत्नीभ्यश्चानुवासरं हृद्या विद्याः समर्पयामास । देवकन्यानां प्रियंवदायाश्चन्द्रप्रभायाश्च सप्रेमप्रयासेन सर्वा मुनिकन्याः सर्वा मुनिपत्न्यश्च विदुषीतमाः समासन् ताभिर्निर्मितानि नवीनानि पुस्तकानि चन्द्रप्रभायाः प्रियंवदायाश्चातीव चेतःसंतोषकराणि जातानि । प्रायः सद्गुरवः स्वकीयशिष्याभ्युदयविलोकनैकलुब्धा एव भवन्ति । तासां कलाकौशल्यं तासां नीतिनैपुण्यं तासां शास्त्रज्ञत्वं तासां वक्तृत्वविशारदत्वं चालोक्यालोक्य देवकन्यानां प्रियंवदायाश्चन्द्रप्रभायाश्चाविस्मर्यण्यपि दुःखानि विस्मृतिपथमिवोपययुः । यथा कन्यानां निष्प्रतिमा विद्वत्तासीत् तथा विद्यार्थिनामपि विद्वत्ता निष्प्रतिमतमासीत । तैस्तु निष्प्र-

तिमया गुरुभक्त्यैव संपादिता सद्विद्या । यतो मणिमयतामुपगते स्वसद्गुरौ सत्यशीले तत्प्राणप्रियया प्रियंवदया सस्नेहमालिखितमात्मगुरोः सत्यशीलस्य चित्रफलकमाराध्याराध्य भक्त्या तत्सकाशात्संपादितं सर्वं सद्विद्याहृदयं विद्यार्थिभिस्तैः । विद्यार्थिनां कन्यानां चानन्यसामान्यां विद्वत्तां विलोक्य सर्वे मुनयोपि परमं परितोषं प्रापुः । विद्यार्थिनः कन्याश्च चन्द्रप्रभायाः प्रियंवदाया देवकन्यानां च सप्रेमप्रयासप्रयत्नपरंपरया विद्वद्वर्णनीया भवेयुरेवेति न चित्रं परं तदाश्रमवासिनः शुकसारिकादयः पक्षिणोप्यतिपरिचयाच्छास्त्रकुशलाः संबभूवुः । आत्मनारब्धं सद्विद्यादानरूपं सत्कर्म तादृशीमुत्तमतमां स्थितिमारूढमालोक्य प्रेमाश्रुधारा अपारा अवास्रजन्नजस्रं चन्द्रप्रभा प्रियंवदा देवकन्याश्च । आबालवृद्धं सर्वोपि तदाश्रमवासी लोकोऽध्ययनमध्यापनं चास्माकं परमो धर्म एवेति मेने । ते सर्वेपि सर्वेभ्यः स्वशिक्षितं सर्वं परमेण प्रेम्णा शिक्षयामासुः ।

एवमुक्त्वा विहस्योपमन्युर्महाराज कीर्तिपाल! प्रधान शिवशर्मन्! भक्तवत्सलस्य भगवतश्चन्द्रचूडामणेर्भक्तवत्सलतामिमामालोक्य साश्चर्यानन्दनिमग्नमानसोहं भवामि । नीलमणिमयकाया अङ्गवङ्गकलिङ्गभूपाला ये संयमिन्यां यातनाशतान्यनुबभूवुस्तेषां मध्यादेकं त्वत्पत्न्यां जन्म ग्रहितुमितरौ चोभौ त्वत्प्रधानस्य पत्न्यां जन्म ग्रहितुं समाज्ञापयत्यद्य परमकृपालुः परमेश्वरस्तदमुष्यातिरुद्रस्य पूर्णाहुतिर्विधीयताम् । परमेश्वरेण परिपूरितं युष्मदभिलषितं तेन संतुष्टं मे स्वान्तम् । न कदाचिदपि सदाशिवपदारविंदयुगलार्हणा निष्फलतामुपगच्छतीत्युक्त्वा व्यरंसीत् ॥ उपमन्युवचनश्रवणोत्तरक्षण एव भगवन्! परमदयार्द्रहृदयेन परमेश्वरेणास्माकं मनोरथपूर्तिर्निर्मिता तज्जन्यपरितोषात्तद्गुरुजनानां तत्प्रियजनानां तद्धर्मपत्नीनां च वियोगाधिक्यं भविष्यतीति विचारजन्योऽपरितोषो विशेषेण तुदति स्वान्तं नौ, ततः परमेश्वरस्तान्

शापमुक्तान् प्रियजनसंयोगसुखभाजश्च विधायास्मन्मनोरथपूर्तये कमप्यन्यमेव विचारमकरिष्यच्चेत्सम्यगभविष्यदिति नः प्रतिभातीति कीर्तिपालशिवशर्माणौ सप्रणाममुपमन्युं प्रार्थयामासतुः । कीर्तिपालशिवशर्मणोरेतां वाचमाचम्योपमन्युरपि वत्सौ कीर्तिपालशिवशर्माणौ! युक्तैवोक्तिर्युवयोः शोभते भवादृशां भव्यानां स्वसुखनिरपेक्षं परसुखाभिलाषिता, परं नैतदविदितं युवयोर्यत्सर्वैः स्वकृतानि सुकृतानि दुष्कृतानि वा सर्वथा भोग्यान्येवेति । यद्यपि चन्द्रप्रभाप्रियंवदादेवकन्यानां विद्यावितरणजन्यान्यगण्यान्येव पुण्यानि तथाप्यङ्गबङ्गकलिङ्गनरपालैः परपरिग्रहावलोकनलोभोपार्जितानां दुष्कृतानां परिणामफलानि न पूर्णतयोपभुक्तानि यावत्तावत्कुतस्तेषां चन्द्रप्रभादिभिः समं समागमप्रत्याशापि । किं च भवादृशां गृहे जन्मलाभोपि तेषां चन्द्रप्रभादिप्रदत्तविद्यादानप्रभवप्रभावेणैव भविष्यतीति बोध्यम् । यदा च सद्विद्यावितरणामरतरुततयः परिपूर्णतया फलिष्यन्ति तदा त्वरिततरमेव ते पापशापसंतापमुक्ताः परमपरितोषयुक्ताश्च स्वैःस्वैः प्रियजनैः सह संयोगसुखान्यनुभविष्यन्ति । ततः परमकृपालुना परमेश्वरेण यद्विचारितं तत्सम्यगेवेति चिन्त्यमित्युक्त्वा वचोविराममकरोन्मुनिवर्यः । निशम्य मुनिवर्यवचनं पुनरपि भगवन् भूतार्थैव भूताभ्युदयकरस्य भगवतः सूक्तिः, परं युष्मन्मुखादेव श्रावंश्रावं हृदयभेदकानि तानि तानि वृत्तान्तानि तथा तथा भिन्नं नौ हृदयं येनास्मद्गृहे पुत्रतामुपलभ्य संपूर्णमायुः संभुज्य तदन्ते निजैः प्रियजनैः सह समागमसुखं लभेरन्नेते नैतावन्तं विलम्बमेव सहते स्वान्तं नौ तदगत्यैवास्मत्पुत्रतां चि॰विरहदुःखितान् स्वजनान् सुखयन्त्वेत इयतैवास्माकं पुत्रजन्माधिकतर आनन्दो भविता । चन्द्रप्रभाप्रियंवदादेवकन्याश्च कीदृशानि दुःखान्यनुभवन्त्यनुक्षणमेतद्वियोगव्याधिनेति नाविदितं नौ ततो नास्मत्सुखाशया तासां वियोगव्याधिवृद्धिं विधातुमिच्छाव इत्युक्त्वा मौनमालम्ब्य स्थितौ कीर्तिपाल-

शिवशर्माणौ । तत उपमन्युरपि वत्सौ! निष्प्रतिमेनाधुनातिधन्येन सौजन्येन संतुष्टं मे स्वान्तं स्वसुखनिरपेक्षा परसुखसापेक्षा च वर्ततामनुघस्त्रमजस्त्रमीदृश्येव युवयोर्मनोवृत्तिरित्याकाङ्क्षे च। विरलाः खलु परार्थ एव स्वार्थधियो भवादृशा भूवलयभूषणायमाना मानवमणयः । सकलोप्यवगतः खल्वाशयो युवयोर्मया तथापि नाज्ञातपूर्वमिदं वत्सयोर्यदचिन्त्यानन्दशक्तिशालिना परमेश्वरेण निर्मिता अनन्ता लोकास्तेषु तेषु चायुर्मानव्यवस्था अपि पृथक्पृथक्प्रकारा एव परिकल्पितास्तेनैवेति । तथाहि । सन्ति तादृशा अपि लोका यत्रास्माकं मासोपि वासरायते, सन्ति तादृशा अपि लोका यत्रास्माकं संवत्सरोपि वासरायते, सन्ति तादृशा अपि लोका यत्रास्माकं संवत्सरपञ्चकमपि वासरायते, सन्ति तादृशा अपि लोका यत्रास्माकं संवत्सरशतं संवत्सरसहस्रं संवत्सरलक्षं चापि वासरायते । इदानीं यस्मिन् लोके चन्द्रप्रभादयो निवसन्ति तत्रास्मदीयसंवत्सरेण वासरो भवति तेनाङ्गवङ्गकलिङ्गेशा युवयोर्गृहे लब्ध्वा जन्म भुक्त्वा संपूर्णतममायुरनुभूय पुत्रपौत्रप्रपौत्रमुखदर्शनसुखानि संभुज्य प्राज्यं साम्राज्यं कृत्वा प्रजापालनपोषणलालनानि विधाय चैहिकामुष्मिकश्रेयःसाधनानि यदा पञ्चविंशत्युत्तरशतवर्षवयस्का जराजीर्णशरीराः शरीराणि परित्यक्ष्यन्ति ते तदा चन्द्रप्रभादीनां तादृशस्थलप्रभावान्मासचतुष्टयमात्रमेव वियोगदुःखं भोग्यं भविष्यति । तच्च तेषां युवयोरालये जन्माभावेपि ताभिर्भोग्यमेव यतस्तद्देशीयमासचतुष्टयादर्वाङ् न ते ताभिः समं समागमानन्दमाप्तुमर्हास्ततो भक्तवत्सलेन भगवता दाक्षायणीहृदयदयितेन युक्तमेवाज्ञप्तमिति मन्येहमित्युक्त्वा तूष्णीमासीत् । कीर्तिपालशिवशर्माणौ च भगवन्नत्रभवतो भवतः प्रणतवत्सलस्य परमकृपापीयूषपारावारस्य परमेश्वरस्य चाज्ञां शिरसा वहाव इत्युक्त्वा विधायातिरुद्राणां पूर्णाहुतिं समर्प्य मुनिवर्येभ्यो मुनिपत्नीभ्यश्च मनोरथपथव्यतीता दिव्याम्बरालंकारसंपद आदाय च सप्रणामप्रणामार्पणपूर्वं महामुनेरुपमन्योरन्येषां

चाश्रमवासिनां मुनीनामाज्ञां स्वकीयां राजधानीमलंचक्रतुः । निर्व्यलीकभक्ति-भरभाजनेन जनेन सदा सदाग्रहनिर्मिता सदाशिवपदार्चा न कदाचिदपि निष्फलतामुपैतीति लोकोक्तिर्न मृषा । ततः स्वल्पेनैवानेहसा महाराजकीर्तिपालस्य धर्मपत्नी सुकन्या पुत्ररत्नं प्रसूय रत्नप्रसूत्वमन्वर्थमात्मनश्चकार । शिवशर्मणो धर्मपत्न्या सुबालयापि तस्मिन्नेवाहनि पुत्ररत्नद्वयं प्रसूतम् । ते च त्रयोपि कुमाराः क्रमात्सद्गुरूनुपास्य विद्वत्तमाः संबभूवुः । परमेश्वरप्रसादेनैवं चरमे वयसि संप्राप्तानां सत्पुत्राणां सद्गुणगणान् विलोक्य परमं परितोषमापतुः कीर्तिपालशिवशर्माणौ । ततोधीताध्येतव्यो विदितवेदितव्यश्चात्मकुमारः कीर्तिपालेन राज्ञा राज्यासनेभिषिक्तः शुभे दिवसे शुभे मुहूर्ते शुभे योगे समर्पितं प्रधानपदं च प्रधानमण्डलमौलिमण्डनमणेः शिवशर्मणः पुत्राभ्यां । त्रयाणां च तेषां राजनीतिनैपुण्यं प्रजानुरञ्जनप्रावीण्यं निखिलनिगमागमाभिज्ञत्वं चानुभूयानुभूय संप्राप्तस्वान्तसंतोषो महाराजः कीर्तिपालः सह पत्न्या सह च सपत्नीकेन शिवशर्मणा तपोवननिवाससुखान्यन्वभवत् । तत्र च तप्त्वा तपांसि जप्त्वा जप्यानि कृत्वा कृत्यानि ज्ञात्वा ज्ञेयानि ध्यात्वा ध्येयानि संपूज्य च पूज्यानि परमशिवप्रसादात्परमशिवपदभाजौ बभूवतुः सकलत्रौ कीर्तिपालशिवशर्माणौ । परमशिवप्रसादप्रदत्तास्तत्पुत्राश्च पञ्चविंशत्युत्तरशतवर्षवयस्काः पुत्रपौत्रप्रपौत्रमुखदर्शनसुखभाजः पुरस्कृत्या कृतकृत्यानां निःशेषाणि सार्वभौमभोग्यानि सुखान्यनुभवन्ति । तथाहि, आपञ्चमवर्षादाविंशतिवर्षं तैः समुपार्जिताः सद्गुरुभ्योतिहृद्याः सद्विद्याः, कृता निर्व्यलीका भक्तिर्मातृचरणानां पितृचरणानां सद्गुरुचरणानां च, संग्रहीतः सद्गुणगणरत्नसंचयः, समनुभूतः संप्राप्तपवित्रकलत्रमित्रैर्निःसारोपि ससार इव संसारः, समधिरूढाः सत्पुत्रपौत्रप्रपौत्राभ्युदयविलोकनेन पराकाष्ठां सुखिजनानां । एवमखिलविभवाभ्युदयावाप्तिर्न विना दयालुचन्द्र-

मौलिदयावलोकलहरीलीलाभिरभिलभ्या, विचार्यतां तावत् सत्यपि बाल्ये विहाय मातरं परिहाय पितरं परिहृत्य परिजनं स्वीकृत्य सद्गुरुकुलनिवासं विरचय्य च परया श्रद्धया सद्गुरुचरणपरिचर्यास्तत्कृपया सद्विद्यासंपत्संपादनकरणं किमल्पानन्ददं ? सत्यपि यौवने सत्यामप्यप्रतिरूपायां रूपसंपत्तौ सर्वोत्तमायां शरीरसंपत्तौ स्वाधीनायां च साम्राज्यसंपत्तौ नीतिमार्गाल्लिशमात्रमप्यस्खलनं किं नाश्चर्यानन्ददं ? न स्वीकृत्य तनुमदं नोरीकृत्य धनमदं नोररीकृत्य यौवनमदं दूरीकृत्य च दुःसङ्गदुराचारौ मनोवाक्कायकर्मभिरेकपत्नीव्रतपरायणान्तःकरणता किमल्पाश्चर्यकरी? वृद्धत्वे च सत्यपि विद्यावृद्धत्वे ज्ञानवृद्धत्वे तपोवृद्धत्वे धनवृद्धत्वेऽनुभववृद्धत्वे वयोवृद्धत्वे चात्मनि स्वाज्ञानुसारिण्यपि सकलपरिवारे स्वाधीनेपि प्रधानमण्डले सामन्तमण्डले प्रजामण्डले च लेशमात्रमप्यन्तःकरणालवाले नाविष्कृत्य मदाङ्कुरमभिमानाङ्कुरं महत्त्वाडम्बराङ्कुरं च सार्जवं सविनयं सविवेकं सद्गुरुदेवभूदेवपरदैवतानां चरणपरिचर्याचरणं शास्त्रसङ्गकरणं सत्संगानुसरणं च किमल्पसंतोषपोषकं? तेषां शरीराणि जराजीर्णानि वलीपलितविरूपाणि क्षीणसत्वानि च सांप्रतं संजातानि परं प्रतिदेशं प्रतिनगरं प्रतिग्रामं प्रतिखेटखर्वटं च वेदाध्ययनशालाशास्त्राध्ययनशालापुराणेतिहासाध्ययनशालाकाव्यकोशनाटकाध्ययनशालाकुमारिकाध्ययनशालापुस्तकालयमालास्थापनजन्यानन्यसामान्यागण्यपुण्यप्रबद्धानि यशःशरीराणि तु नाकल्पं जराजीर्णानि न वलीपलितविरूपाणि न च क्षीणसत्वानि भविष्यन्ति । तदीयविजयराज्ये यत्रयत्राहं दृष्टिं निक्षिपामि तत्र तत्रैकतश्चतुर्वेदपाठिनां मुखकमलेभ्यो निःसृतस्तत्तन्मन्त्रघोषः श्रवणपुटपथेनान्तःप्रविश्यान्तःकरणं परमानन्दनिमग्नं करोति, अन्यतोनेकशास्त्रार्थप्रवृत्तानां निखिलशास्त्रसारस्यविज्ञानां विदुषां पुण्यपवित्रास्वविरतं प्रवहन्तीषु गीर्वाणवाणीसुधातरङ्गिणीषु निमज्यान्तरात्मा मे कमप्यन्यादृशमेवामन्दमानन्दमनुभवति, परतः पुराणेतिहासश्रवणेन व्यतीतमपि

वृत्तान्तजालं प्रत्यक्षमिवानुभवति मनो मे, अपरतः काव्यचम्पूनाटककथास्वधिगतकथापथातीतप्रावीण्यानां सत्कवीश्वराणां पीयूषनिर्विशेषं कवितारसमापीयापीय राजपदाधिरूढमिव राजाधिराजपदाधिरूढमिव महाराजपदाधिरूढमिव चात्मानं मन्येहं, इतरतश्च कन्याशालासु सद्विद्यासंपत्संपादनातिधन्याः कन्याः स्त्रीपाठशालासु सद्विद्यासमुपार्जनजनितस्वधर्ममर्मज्ञानतया पातिव्रत्यपरायणाः पवित्राः पतिव्रताः कुलस्त्रियः पुस्तकालयेषु च निरवधिरसानि नानाविधान्यसंख्यानि पुस्तकान्यालोच्यालोच्य परमं परितोषमनुभवतोनेकान् पौरान् जानपदांश्च जनानालोक्यालोक्याभ्यां लोचनाभ्यां यः परितोषो यः प्रहर्षो यश्चानन्दोऽनुभूयते मया न तं वक्तुं शक्ता वाणी मे । तत एव ब्रवीमि तैः खलु जन्मतः प्रभृति यद्यत्सत्पुरुषकृत्यं तत्तत्कृतं यद्यत्सत्पुरुषज्ञेयं तत्तज्ज्ञातं यद्यच्च सत्पुरुषप्राप्यं तत्तत्प्राप्तं च । अतःपरं तेषां प्राप्यमभिलषणीयमीश्वरादभ्यर्थनीयं च यद्यस्ति तर्हि पूर्वजनुर्मातापितॄणां पूर्वजनुःप्राणप्रियाणां पूर्वजनुःस्नेहिसुहृद्बन्धुबान्धवानां च समागमानन्द एव नान्यत् । सति च तैः समं तेषां समागमे लब्धं देवेभ्यो वरप्रदानं समासादितः सद्भाग्यसमुदयसमय उत्तीर्णश्चापार आपत्पारावारस्तैः फलितं च तेषां सद्विद्याप्रदानपुण्यपारिजातकुञ्जपुञ्जेनेति मन्येहमित्युक्त्वा, वत्स! चन्द्रप्रभाचेतश्चकोरचन्द्र शिवप्रसाद! वत्सेन भवतः प्रधानयोश्चानयोः पूर्वजनुर्वृत्तान्तनिवेदने नियुक्तोहमादितोन्तपर्यन्तसकलवृत्तान्तश्रवणाविघ्नसिद्ध्यर्थमितरकथामिवाकथयं कथामिमां, परं कैलासशैलावासविलासवान् भवत्पिता विनयध्वज एव कीर्तिपालः, पवित्रपातिव्रत्यप्रभावोपार्जितपतिलोकाभवन्माता स्वकुलकैरवचन्द्रिका विवेकचन्द्रिकैव सुकन्या, तयोश्च संसारसर्वस्वं हृदयसर्वस्वं जीवितसर्वस्वं च भवानेव शत्रुशल्यावतारः सत्पुत्र इत्यशङ्कमवगन्तव्यम् । तथैव भवत्प्रधानयोरनयोर्जनको ज्ञाननिधिरेव शिवशर्मा, तयोर्माता ज्ञानसुन्दर्येव सुबाला, तयोरेकः सत्य-

शीलावतारः शिवदत्ताभिधानोयं पुत्रः कलिङ्गेशचित्रसेनावतारः शंभुदत्ताभिधानश्चान्योऽयं पुत्रोस्तीत्यवगन्तव्यम् । परमशिवप्रासादप्राप्तत्वाद्भवत्पिता नामकरणसमये शिवप्रसाद इति भवदीयं नाम चक्रे । इति कैः कैः कीदृशैश्च पूर्वभवपुण्यैरुपलब्धैषा सुरासुराभिलषणीया सुखपरंपरा वत्सेनेति निवेदितमशेषं वत्साय । किं चायमपि जनो नावनितलनिवासी किंतु युष्माकं पूर्वजनुःप्राणप्रियाभिश्चन्द्रप्रभाप्रियंवदादेवकन्याभिरविरतं वितीर्णेन विद्यादानेन युष्मद्गुरुजनविरचितया निर्व्यलीकया भक्त्या च संप्राप्तसंपूर्णपरितोषस्य भगवत आशुतोषस्य चन्द्रचूडामणेरेवाज्ञया प्राप्तो युष्मदीयजन्मत्रयकृत्यसाक्षी मुनिरुग्रतपा एवास्तीति बोध्यम् । यद्यदभूद्भवति भविष्यति च श्रेयो युष्माकं तस्य सर्वस्य मूलं विद्यादानं विद्यादानं विद्यादानमेवास्तीत्यसंदेहमवगत्य न भवद्भिर्विद्यादानचिन्तामणिः कदाचिदपि परिहर्तव्यः, इत्युक्त्वा व्योममार्गमनुसरति तस्मिन् मुनिवर्ये शिवप्रसादशिवदत्तशंभुदत्ताः कामप्यन्यादृशीमेव दशामन्वभूवन् । तेषां स्मृतिपथातिथितामगच्छदखिलमतीतं वृत्तान्तजालं, नेत्रकमलेभ्यः प्रागलन्नविरलाश्रुसलिलावलयः, प्रावर्तन्त मुखेभ्यो दीर्घदीर्घा अत्युष्णाश्च निःश्वासाः शून्यतामगच्छन्मनांसि । विचारशक्तिरुत्साहशक्तिः कवित्वशक्तिश्चोग्रतपसा सहैवान्तर्हितेव न पुनः कदाचिद्दर्शनं ददुः । विषयसुखानि विषाणीव राज्यसुखान्यसुखानीव जीवितं च भारभूतमिवाभूत्तेषां । न शास्त्राणि न काव्यानि न नाटकानि न चम्प्वो न कथाश्च तदीयस्वान्तसंतोषपोषणाय संबभूवुः । न कोपि वासरो न कापि शर्वरी न कोपि प्रहरो न कापि घटिका नकोपि क्षणो न कोपि लवश्च पूर्वजनुर्गुरुजनप्रियजनस्मरणविहीनो व्यतीयाय तेषाम् । ते चानुक्षणं क्षणदारमणभूषणं भगवन्तं प्रति तत्समागमानंदमेवाभ्यर्थयामासुः । ग्रहग्रहीततामिव भूताभिभूततामिव मूकतामिव बधिरतामिवान्धतामिव स्तब्धतामिव मूढतामिव च गता न किमप्यवदन् न कि-

मप्यपश्यन् न किमप्यशृण्वन् न च किमप्यचेष्टन्त । केवलं पवित्राभिः स्वधर्मपत्नीभिः सत्पुत्रैः सन्मित्रैश्चात्याग्रहाद्वाच्यमानाश्च प्रियैषिणो हितैषिणः कल्याणाभिलाषिणश्च ये ये नः कलत्रमित्रपुत्रादयः स्नेहिनः संबन्धिनो बन्धवो बान्धवाश्च सन्ति तैस्तैः सद्विद्यारत्नवितरणमेव करणीयं युष्माकमस्माकं च तदेव श्रेयस्करं नान्यदित्येतान्येवाक्षराण्युच्चारयामासुः । तेषां च ततः प्रतिक्षणं क्षीणाः शरीरयष्टयो न पूर्वजनुःपरिचितप्रियजनसमागमाशा, विभिन्नो मुखवर्णो न मनोविचारः सकंपतामगच्छन् हृदयानि न प्रीतिलता विरसान्यभवन्मुखानि नान्तःकरणानि मन्दतामभजत्स्वरो न स्नेहप्रसरः, प्रलयमुपययौ च निखिलेन्द्रियशक्तिर्न प्राक्तनप्रियजनस्मृतिशक्तिः । विलोक्यैतेषां तादृशीं दशां सत्पुत्रैर्दीनानाथप्राणिदेवभूदेवगुरुदेवसात्कृताः सुवर्णपूर्णाः सर्वे कोशाःकुलीनाभिर्धर्मपत्नीभिः समर्पितं सर्वस्वं कन्याशालाभ्यः स्त्रीपाठशालाभ्यश्च, पवित्रैः सन्मित्रैर्लुण्टायितं स्वीयं सर्वस्वं गोब्राह्मणरक्षणोपयोगाय, श्रावंश्रावं च शिवप्रसादशिवदत्तशंभुदत्तानां केनापि मुनिना सह रहःसंवादोत्तरं प्रवृत्तां तां प्रवृत्तिं सर्वेपि पौरा दुःसहदुःखविषादविषोदधिनिमग्नाः परित्यज्य संसारसुखानि महाराजस्य प्रधानयोश्च श्रेयोभिवृद्धयेऽगण्यानि पुण्यानि कर्तुं प्रारम्भन्त । विदितैतद्वृत्तान्ता जानपदाश्च तथैव तेषां श्रेयसे चक्रुरसंख्यानि सुकृतानि प्रार्थयामासुश्च प्रतिपत्तनं प्रतिपुरं प्रतिग्रामं प्रतिघोषं महाराजदुःखदशाश्रवणोज्जृम्भितदुःखव्रजाः प्रजाः स्वस्वदैवतानि तद्दुःखदूरीकरणाय । सकलोपि लोक एवमुद्वेलोद्वेगौदास्योदधिनिमग्नमानसोभूत् । तस्मिंश्च व्यतिकरे प्राणप्रियवियोगानलज्वालाजालाकुलाशयतया चन्द्रप्रभा, प्रियंवदादेवकन्याभिः सहोत्तममिदानीमस्माकं दुःखदग्धादस्माज्जीवितान्मरणमेवेति निश्चित्य मान्यान् गुरुजनान्मुनिजनान्मुनिपत्नीर्मुनिकुमारिका मुनिकुमारांश्च समाहूय सभायां तेषामग्रेऽपि मान्या मातरः पूज्याः पितरो वन्दनीया मुनयो

मुनिपल्यश्च! विदितमेव सर्वेषां युष्माकं यदस्माभिरद्यावधि मरणादप्यधिकदुःखदुःसहमिदं जीवितं स्वस्वप्राणसमप्रियतमसमागमाशयैव धार्यते, सा चाशा केनापि महानुभावेन मुनिनाऽस्यै देवकन्यायै विस्तीर्णा। ततः परमस्माकं जीविताबलंबनं श्रुतशीलोपि नीलमणिमयतामगच्छत् । तल्लिखितां पत्रिकां चादायैषा देवकन्या समागता ! तल्लेखानुसारेण वर्तन्तीनामस्माकमकस्मान्मुनिवरार्पितो मार्जारो राजकुमारोभूद्यन्मुखाच्छ्रुतमखिलमतीतं वृत्तान्तजालम् । सोपि राजकुमारः स्वकीयपूर्वपुण्यप्रभावेन स्वकीयसन्मित्रदशावशात्मा समभूत् । तथापि लज्जाकरं जीवितं वहन्तीनां पुनराशाजीवितप्रदमादेशं कस्यापि मुनिवरस्यादायागतैषा देवकन्या । तदादेशानुसारेण पुनरपि प्रवृद्धया श्रद्धया विद्याप्रदानपुण्यकर्मणि प्रवद्धः परिकरोस्माभिः । एवं विद्यावितरणपरायणांतःकरणानामस्माकं व्यतीतानि कल्पकल्पानि वर्षाणि न परं महाभागानां तेषां मन्दभाग्याभिरस्माभिः समागमानंदोनुभूतः । कीदृश्या श्रद्धया कीदृश्या प्रीत्या कीदृशेन चोत्साहेन च विद्यार्पणं विधीयतेस्माभिरेतद्विषये नानाभिज्ञा यूयं सर्वेपि । तादृशविद्यादानकल्पद्रुमवनमपि नाद्यापि फलाभिमुखं भवति । तथापि नास्माकं तस्मिन्नश्रद्धाऽप्रीतिररुचिर्वा स्वप्नेप्युत्पद्यते यतो निःशंसयं विद्यादानसमानमानमन्यद्दानमेत्र लोकत्रयेपि श्रेयस्करं नास्तीति जानीमहे मन्यामहे च । प्राणप्रियवियोगकारणं यावत्प्रमाणमुपार्जितमपुण्यमस्माभिर्न तावत्प्रमाणं विद्यार्पणजन्यं पुण्यं परिणतमद्याप्यतः कुतस्तत्फलप्राप्तिप्रत्याशापीति । कदा च विद्यार्पणप्रोत्पन्नपुण्योच्चयः पूर्वभवोपार्जितपातकव्रातकदर्थनसमर्थः संभविष्यतीति न निश्चयस्तदिदं समर्प्यते सर्वस्वं श्रीमद्भ्यः । श्रीमद्भिश्चानुवासरं विद्यादानविधानमत्यादरेणाचरणीयं सैवेयं नश्वरमा परमाभ्यर्थना । वयं च गुरुजनैः सह यत्र समुल्लसति मोक्षलक्ष्मीलताकन्दमिवेन्द्रनीलमणिमयमिन्दुमौलेर्लिङ्गं यत्र विलसन्ति महाभागानां तेषां नीलमणिमय्यो मूर्तयो

यत्र चासायंसमयवासिनः प्राणिनो नीलमणिमयतामुपगच्छन्ति तत्र गत्वा शिवलिङ्गदर्शनानन्दमनुभूय निर्वाप्य चिरविरहतप्तानि लोचनानि महाभागानां तेषां नीलमणिमयमूर्तिलावण्यावलोकसुखसुधासिंधौ स्थित्वा चासायंसमयं नीलमणिमयतामेवोपयास्याम इति निजाभिप्रायं निवेदयामास। चन्द्रप्रभावचनविरामोत्तरक्षण एव मुनीनां मुनिपत्नीनां मुनिकन्यानां मुनिकुमाराणां च नयनेभ्यो न्यपतन् स्फाराःस्फारा अश्रुधारा मुखकमलेभ्यश्च दीर्घदीर्घैरत्युष्णतरैर्निःश्वासमरुद्भिः समं, हा दैव किमद्य फलितमस्माकं मन्दभाग्येन परिणतं पापपुंजेन समाप्तिरासादिता सुखदया दशया सामीप्यमुपसादितं च दुःसहदुःखदया दशयेत्येवंविधा हाधिक्कष्टबहुला हर्षहीना दुःखदीना वाचः। किंबहुना सर्वापि सभा चित्रलिखितेव स्तब्धेव मूढेव मूकेव बधिरेव च सद्यः संबभूव। इतः प्रस्थितेषु पुण्यचरित्रेषु पवित्रेष्वेतेषु महात्मसु पुण्यशीलशालासु चैतासु महासतीषु का दशास्माकं भविष्यति। हाहन्त स्वप्नेप्यदुःखार्हाणामप्येतेषामीदृशानि दुःखान्यापतन्ति। धिग्विधातारमसदृशकारिणमथवा विषमः खलु पूर्वकर्मपरिपाक आराजरङ्कं सर्वेषाम्। इत्याद्यनेकविचारापारपारावारमग्नाखिलसभ्यां सभां विलोक्योत्थाय चन्द्रप्रभा, महानुभावा महर्षयः पूज्या मुनिपत्न्यः प्रियपुत्र्यः प्रियपुत्राश्च! नाद्यापि मध्यमलंकरोति नभोमण्डलस्य भगवान्नभोमणिर्गन्तव्यं च तत्र सन्निहिते सायंसमये यामद्वयपरिमितोद्यापि वर्तते जीवितावधिर्नस्तत्किमपि भाषणं भवतामग्रे कर्तुं समुत्कण्ठते स्वान्तं मे तत्रावधानदानमहानुग्रहं करिष्यन्त्यत्रभवन्तो भवन्त इत्याशासे इत्यवोचत्। चन्द्रप्रभाया इमां वाचमाचम्य सर्वापि सभा किंचित्समाश्वस्तचित्ताभूत्। आविरभूत्तस्या हृदये किमपि धैर्यं विकसितानि सर्वेषां सभ्यानां मुखकमलानि, तेषां चक्षुश्चकोरावली तु चन्द्रप्रभामुखचन्द्रप्रभाभिमुखी किमद्य वदिष्यति भगवती चन्द्रप्रभेति सोत्कण्ठा समभूत्। भाषणश्रवणसमुत्सुकतयातिनिश्चलामेकचित्तामि-

वावलोक्य सकलां सभां पुनरुत्थाय चन्द्रप्रभा प्रणामप्रणम्रमस्तका मुकुलितकर-कमलयुगला च, अयि वसुन्धरावलयविभूषणायमानसद्गुणगणा आर्यवर्याः ! समस्तशास्त्रसुधासागराणां, निःसंख्यपुराणेतिहासशेवधीनां, काव्यचम्पूनाटक-कथाकथानकरत्नरत्नाकराणां युष्माकमग्रे मादृशाल्पज्ञजनभाषणं तु कलशस-लिलाभिषेकं सलिलनिधेश्चेलाञ्चलसमीरं समीरस्य प्रदीपप्रकाशं च लोकत्रयी-प्रदीपस्य दिनमणेरनुकरोति । न नविदितमेतदपि मे यन्निगमागमापारपारा-वारपारदृश्वनां श्रीमतामग्रे भाषणारंभसाहसमेव ममाल्पज्ञतामनात्मज्ञतामविवे-कविज्ञतामविचाराभिज्ञतां च ज्ञापयतीति । तथाप्येतासां युष्मत्पुत्रीणामेतेषां च युष्मत्पुत्राणां मयि निबद्धापूज्यबुद्धिर्मान्यबुद्धिर्गुरुबुद्धिश्च बलान्मां किमपि वक्तुं युनक्तीति वक्तुमाज्ञप्तमिच्छाम्यात्मानं युष्माभिः क्षन्तुं क्षमाश्च क्षमाक्षमायमा-नमानसा यूयमेतदप्यविवेकान्तरं ममेत्युक्त्वा व्यरंसीत् । चन्द्रप्रभावचनवि-रामोत्तरक्षण एव सर्वसभानुमतेनोत्थायैकः कोपि स्थविरः स्थिरप्रज्ञो मुनि-र्वत्से ! यदुच्यते वत्सया तत्ते विद्याया विवेकस्य विनयस्य सद्गुणानां सत्कु-लस्य चादूषणं किमपि भूषणम् । त्वादृशीनां राजपुत्रीणामेवमेव युक्तं वक्तुम् । परमसंख्यसंख्यावत्कुलसंकुलं सकलमप्यदः सदस्त्वद्य सद्य एव त्वद्वदनारविं-दविनिर्गतां सदुपदेशसुधाधारामातृप्ति पातुमातुरतरस्वान्ततां बिभर्ति तन्न युक्तं विलंबावलंबनं कर्तुं तदलमिदानीं विवेकामृतसेकातिपल्लवितेनान्यविषयवाङ्म-यमंजुमंजरीजालेनावध्यतां सदुपदेशसुधाप्रपामण्डपः पीयतां सर्वैरातृप्ति श्रव-णपुटैः सदुपदेशपीयूषरसो रसज्ञैर्मा क्षणः क्षणार्द्धं वा सदुपदेशोक्तिव्यतिरिक्तम-तिक्रामतु भवत्या इत्याकाङ्क्षते सर्वाप्येषा सभेत्युक्त्वोपविवेश तदनु तदनुज्ञा-नुसारेणोत्थाय चन्द्रप्रभापि भगवन् ! भगवदनुज्ञां शिरसि संधारयामीत्युक्त्वा प्रवक्तुमारभत । अयि प्राणनिर्विशेषाः सत्पुत्राः सत्पुत्र्यश्च मे ! सर्वैर्मानवैर्य-थास्वधर्मं यावज्जीवं वर्तितव्यम् । स्वधर्मपरिपालनं हि किमपि चिन्तारत्नमेव ।

अर्थप्राप्तिः कामप्राप्तिर्मोक्षप्राप्तिश्च स्वधर्मपरिपालनादेवाविर्भवति । स्वधर्मपरिपालनादेव मनुजनुषां जनुषो जीवितस्य च साफल्यं भवति । स्वधर्मपरिपालनपराङ्मुखतरा नरा न खलु नराः किंतु नराकृतिधराः केपि वानरा एवेत्यवगन्तव्यम् । प्रबद्धाः परमकृपालुना परमेश्वरेण पुंधर्माः स्त्रीधर्माः पितृधर्मा पुत्रधर्मा गुरुधर्माः शिष्यधर्माः स्वामिधर्माः सेवकधर्मा राजधर्माः प्रजाधर्माश्चेत्याद्यनेके धर्मास्तेषां मध्ये यदा यदा यस्मिन् यस्मिन् धर्मेधिकार आत्मनस्तदा तदा तस्य तस्य धर्मस्य परिपालनं मनोवाक्कायकर्मभिर्विधेयम् । तथाहि, पुत्रधर्मपरिपालनाधिकारवत्यात्मनि यथाशास्त्रं पुत्रधर्मपरिपालनपरायणेन, शिष्यधर्मपरिपालनाधिकारवत्यात्मनि शिष्यधर्मपरिपालनपरायणेन, भृत्यधर्मपरिपालनाधिकारवत्यात्मनि भृत्यधर्मपरिपालनपरायणेन, पितृधर्मपरिपालनाधिकारवत्यात्मनि पितृधर्मपरिपालनपरायणेन, गुरुधर्मपरिपालनाधिकारवत्यात्मनि गुरुधर्मपरिपालनपरायणेन, स्वामिधर्मपरिपालनाधिकारवत्यात्मनि स्वामिधर्मपरिपालनपरायणेन भाव्यं भव्येन । मनुजन्मना वर्णाश्रमधर्मपरिपालनं चावश्यमेव विधेयम् । अपूर्णं किल वर्णाश्रमधर्मपरिपालनमंतरा स्वधर्मपरिपालनं स्वधर्मपरिपालनमंतरा च वर्णाश्रमधर्मपरिपालमं । ततो वर्णाश्रमधर्मपरिपालनपूर्वं स्वस्वधर्मपरिपालनं विधेयमित्येतदेव सर्वेषां मनुजनुषां परमं । ततो कर्तव्यम् । तच्छास्त्रसङ्गात्सत्सङ्गाद्गुरुजनपरिचर्यापरिचयाद्वृद्धोपसेवया चावगत्यात्मीयं धर्मं तदनुसारेणैव यावज्जीवं वर्तितव्यम् । स्वधर्मपरिपालने समागतानि दुःखान्यपि सुखान्येव मन्तव्यानि, स्वधर्मपरिपालने समागता हानिरप्यहानिरेव मन्तव्या, स्वधर्मपरिपालने समागता विपदोपि संपद एव मन्तव्या इति स्वधर्मे निधनंश्रेय इत्युक्तवता श्रीरुक्मिणीहृदयदयितेनापि विशदीकृतम् । एवं यथा पुत्रैः पितृचरणेषु मातृचरणेषु च परमदैवतधीभिर्भाव्यम् तच्चरणपरिचर्या च परप्रेम्णा विधेया, यथा पितृभिर्गुणहीनेष्वप्यपराधपरंपरालीने-

ष्वपि स्वापत्येषु निर्निमित्तनिष्प्रतिमवात्सल्यविवशाशयैस्तत्पालनपोषणलालनानि, विधेयानि, यथा कनिष्ठसोदरैर्ज्येष्ठसोदरेषु पितृनिर्विशेषशेमुषीकैस्तत्पत्नीषु च मातृनिर्विशेषशेमुषीकैर्भाव्यं निष्कपटमनोवाक्कायकर्मभिश्च तेषां भक्तिर्विधेया यथा च ज्येष्ठसोदरैः कनिष्ठसोदरेषु पुत्राधिकप्रेमस्थेमभिस्तत्पत्नीषु च दुहितृतुल्यबुद्धिभिरहर्निशं तदीयोभयलोककल्याणपरंपराकरणपरायणैर्भाव्यं, यथा कुलीनतापात्रैः सच्छात्रैः स्वकीयसद्गुरुचरणेषु परमेश्वरनिर्विशेषप्रज्ञैस्तदीयचरणपरिचरणपरायणान्तःकरणैर्भाव्यं, यथा च सद्गुरुभिः स्वकीयशिष्येषु स्वकीयौरसतनयतुल्यवात्सल्यैस्तदीयप्रियहिताभिलाषिभिर्भाव्यं, यथा सद्भृत्यैः स्वभर्तृषु निर्व्यलीकभक्तिभरनम्रैः प्राणार्पणेनापि तदीयप्रियहितविधानसावधानैर्भाव्यं, यथा च स्वामिभिः सेवकेषु स्वौरसात्मजनिर्विशेषस्नेहप्रसरैर्भाव्यं, तथैव, सत्कुलसंभवाभिः पतिव्रतवतीभिः सतीभिः स्वकीयप्राणप्रिये परमेश्वरनिर्विशेषनिष्ठाभिर्मनसा वचसा कर्मणा च तदीयप्रियहितकरणैकाभीष्टाभिर्भाव्यं, यतः पतिव्रतानां संसारसर्वस्वं हृदयसर्वस्वं जीवितसर्वस्वं च प्राणनाथ एव । पतिसेवा पतिव्रतानां यत्प्रियं हितं कल्याणं च करोति न तत्कामदुघा कल्पलता चिन्तामणिर्वा कर्तुं शक्नोति, पतिसेवैव पतिव्रतानां परमो धर्मः परमं कल्याणसाधनं परमं बलं च पतिसेवयैवानेकाः पतिव्रता देवानामपि सेवार्हाः संजाताः,पतिसेवयैवासंख्याः पतिव्रता अखिलाचलावलयालंकारतामगच्छन्, पतिसेवयैवासंख्याः पतिव्रता माननीयमुनिमण्डलमाननीयतामनुबभूवुः पतिसेवयैव शतशः पतिव्रता अपारसंसारपारावारपारमनायासेनासेदुः, पतिसेवयैव सहस्रशः पतिव्रता दुःखदवानलज्वालाजालाद्विमुक्तिमवापुः, पतिसेवयैव लक्षशः पतिव्रताः परमाभ्युदयभाजनतामभजन्, पतिसेवयैव च कोटिशः पतिव्रताः परमेश्वरप्रसादपीयूषपात्रतां प्रापुः । को धर्मः कोऽर्थः कः कामः कोभ्युदयः कः कल्याणनिधिश्चास्ति तादृशो यः पतिव्रताभिरात्मपतिपदपद्मपरिचर्याप्रभावेण प्राप्तुं न शक्यते ? किं बहुना पतिव्रतानां पतिसेवैव सकलकल्याणपरम्परार्पणप्रण-

यिनी जगति जागर्तितरां नितराम् । तत एव पवित्रचरित्राभिः पतिव्रताभिरात्मप्राणपतिपादपद्मपरिचर्या परमेण प्रेम्णा विधेया । पतिव्रताभिरात्मपतिः सविद्यो वा निर्विद्यो वा सुरूपो वा कुरूपो वा सद्गुणो वा दुर्गुणो वा निरोगो वा सरोगो वा कुलीनो वाकुलीनो वा बालो वा वृद्धो वा सदाचारो वा दुराचारो वा अन्धो वा बधिरो वा मूको वा पङ्गुर्वा कामी वा क्रोधी वा मोही वा मत्सरी वा स्तब्धो वा लुब्धो वा मत्तो वोन्मत्तो वा किंबहुना सकलसल्लक्षणहीनोऽपि निखिलदुर्लक्षणलीनोऽपि विविधपापपङ्कपीनोऽपि दुःखदारिद्र्यदीनोऽपि च निर्मलमनोवाक्कायकर्मभिःपरमेश्वरधियाऽनुवासरमनुवेलमादरभरनम्राभिःसकलाभिरबलाभिः परिचरणीय एवेति विदितमेव सर्वेषाम् । यथैव सत्कुलकामिनीभिः स्वकीयप्राण प्रिये निष्प्रतिमप्रेमपरायणाभिर्भाव्यं तथैव सत्कुलसंभवेन भव्येन पुंसा स्वकीयप्राणप्रियायां निष्प्रतिमप्रेमपरायणेन भाव्यम् । सत्कुलसंभवैः सत्पुरुषैः स्वधर्मपत्न्येव प्रीतिपात्रं विश्वासपात्रं संसारसर्वस्वं हृदयसर्वस्वं जीवितसर्वस्वं प्राणप्रिया धर्मार्थकामसहायकारिणी स्वकीयसदनशोभा च मन्तव्या । मनसा वचसा कर्मणा च तस्या एव प्रियं हितं चाचरणीयम् । स्वधर्मपत्नी सगुणा निर्गुणा वा सुरूपा वा कुरूपा वा सरोगा निरोगा वा सर्वज्ञा स्वल्पज्ञा वा विदुष्यविदुषी वा काणी वा काली वा मूका वा बधिरा वा पङ्ग्वीवान्धा वा खञ्जा वा कुब्जा वाप्युत्तमोत्तमेन प्रेम्णा सत्पुरुषैः परिपालनीया लालनीया पोषणीया च । यथा सत्कुलसमुत्पन्नयानार्या नेतरनरवदनमपि विलोकनीयं तथैव सत्कुलसमुत्पन्नेन नरेण नेतरनारीवदनमपि विलोकनीयम् । यथा कुलीनया कान्तया निजपतिहितकरणायैव प्रयत्नपरम्पराहर्निशं विधेया तथैव कुलीनेन कांतेन स्वकीयकांताहितकरणाय प्रयत्नपरम्परा प्रतिवेलं विधेया । यथा सत्कुलसंभवया सुभ्रुवा प्राणान्तास्वप्यापत्सु नैकपतिव्रतं परित्याज्यं तथैव सत्कुलसंभवेन पुंसा प्राणान्तास्वप्यापत्सु नैकपत्नीव्रतं परित्याज्यम् । या च पुरुषेण स्वकीयधर्मपत्नीपाणिग्रहणावसरे स्वाहासहचरसाक्षिकं धर्मेष्वर्थेषु कामेषु सहचरेयं

सहचरेयं सहचरेयमिति विधीयते प्रतिज्ञा सा तु यावज्जीवमप्रमादेन परिपालनीया । एतत्प्रतिज्ञापालनं चैकपत्नीव्रतपालनमूलमेवातो न स्वप्नेऽपि सकलश्रेयोभिलाषिणा मनुजनुषा त्वेकपत्नीव्रतभङ्गो विधेयः । एतन्महाव्रतभङ्गप्रसङ्गत एव राजानो महाराजा राजाधिराजाश्चानेके निमग्ना मज्जन्ति मक्ष्यन्ति च दुस्तरतरविपत्पारावारप्रोत्तुङ्गतरङ्गपरम्परासु । विद्वांसोऽप्यविद्वांसो वीरा अप्यवीरा धीरा अप्यधीरा गम्भीरा अप्यगम्भीराः सद्वंशसंभवा अप्यसद्वंशसंभवाः सत्प्रतिष्ठा अप्यसत्प्रतिष्ठाः सत्कीर्तिवन्तोऽप्यसत्कीर्तिवन्तश्च गण्यन्ते पुरुषा एकपत्नीव्रतपरित्यागप्रभवांहःप्रभावेण । नैकपत्नीव्रतत्यागतुल्यमन्यदेनो नैकपत्नीव्रतत्यागतुल्योन्योनर्थो नैकपत्नीव्रतत्यागतुल्योऽन्योऽन्यायो नैकपत्नीव्रतत्यागतुल्योन्यो महारोगो नैकपत्नीव्रतत्यागतुल्योन्यः सकलकल्याणपथपरिपन्थी चेति निःशङ्कमवगन्तव्यः । स्त्रीणां निजपतिपदपद्मपरिचर्यैवाधिका परं स्नेहसंरक्षणे प्रियहितकरणे विश्वासपात्रगणनायां संसारसर्वस्वगणनायां च यादृशं यावच्च परमेश्वरेण स्त्रीभ्य आज्ञप्तं तादृशं तावच्च पुरुषेभ्योप्याज्ञप्तम् । एकपतिव्रतभङ्गात् धर्मराजो यादृशं यावच्च यातनादुःखजालं समर्पयति स्त्रीभ्यस्तादृशं तावच्च यातनादुःखमेकपत्नीव्रतभङ्गात्पुरुषेभ्योऽप्यर्पयति । यादृशानि यावन्ति च यातनानियुतानि स्वकान्तस्वान्तसंतापनेन नारीभिरनुभूयन्ते तादृशानि तावन्त्येव यातनानियुतानि स्वकान्तास्वान्तसंतापनेन नरैरप्यनुभूयन्ते । यादृश्यो यावत्यश्च दुर्गतयो निजप्राणनाथविश्वासघातकरणेन स्त्रीणां भवन्ति तादृश्यस्तावत्य एव च दुर्गतयो निजप्राणप्रियाविश्वासघातकरणेन पुरुषाणामपि भवन्ति । यादृशां यावतां च पापानां पात्रतां प्रयान्त्यात्मपत्यप्रियाचरणेन प्रमदाः प्रमदास्तादृशां तावतामेव च पापानां पात्रतां प्रयान्त्यात्मपत्न्यप्रियाचरणेन समदाः पुरुषा अपि । यादृशीं यावतीं च हास्यास्पदतामुपयान्त्यात्मपतिविरुद्धाचरणेन युवत्यस्तादृशीं तावतीमेव च हास्यास्पदतामुपयान्त्यात्मपत्नीविरुद्धाचरणेन युवानोपि । यावती यादृशी च निंदा स्ववल्लभे निष्प्रेम-

वतीनां युवतीनां भवति तावती तादृश्येव च निन्दा स्ववल्लभायां निष्प्रेमवतां यूनामपि भवति । यावन्तो यादृशाश्च धिक्कारा निजहृदयदयितेनादरकरणात्पत्नीभ्यो दीयन्ते तादृशास्तावन्त एव च धिक्कारा निजहृदयदयितायामनादरकरणात्पतिभ्यो दीयन्ते । यादृशी यावती चैहिकामुष्मिकश्रेयोहानिर्निजपतिपरित्यागपापकर्मणा भवति नारीणां तादृशी तावत्येव चैहिकामुष्मिकश्रेयोहानिर्निजधर्मपत्नीपरित्यागपापकर्मणा भवति नराणामपि । तथापि केचिदज्ञा अविवेकिनोऽधर्मिष्ठाश्च पुरुषाः कुलधनयौवनरूपगुणविद्याभिजनाद्यनेकमदकरवर्गसर्गसंपज्जनितमदगदान्धतया तिरस्कुर्वन्ति वञ्चयन्ति द्विषन्ति पीडयन्ति च विश्वासघातिनः पापिनः स्वधर्मपत्नीः । नैतावदेव दूरेस्तु धर्मपत्नीपालनलालनपोषणवार्तापि प्रत्युत निर्दयतया दैत्यानप्युपहसन्तोऽसन्तः केचनापराधलवहीना दीना अपि भृशमाताड्याताड्यान्ते परित्यज्यन्त्यमलान्वयसंभवाअप्यबलाः । कीदृशमेतत्पातकं कीदृशमेतन्नीचकृत्यं कीदृशी चेयमविचारवत्ता तेषाम् । क्षणं नानामदगदतन्द्राः परित्यज्य विचार्यं तैर्येयमबला निजजननीजनकयोर्वचनान्मत्पाणिग्रहणप्रणयिनी भूत्वा मदीयतामवलम्बते मया च यास्वाहासहचरसाक्षिकं स्वीकृता यस्याः संसारसर्वस्वं हृदयसर्वस्वं जीवितसर्वस्वं चाहमेवास्मि ययैवाहं गृहस्थतामनुभवामि ययैवाहं पुत्रमुखदर्शनसुखमनुभवामि यस्याश्च पालनलालनपोषणाधारो मदायत्त एवास्ति तामेवैनां यद्यहमेव तर्जयिष्यामि वञ्चयिष्यामि पीडयिष्यामि परित्यक्ष्यामि च तर्हि कोऽन्यस्तामाश्वासयिष्यति कोऽन्यस्तां दयिष्यति कोऽन्यस्तां पालयिष्यति कोऽन्यस्तां लालयिष्यति कश्चान्यस्तां पोषयिष्यति, परित्यक्तायाश्च मया तस्याः का दशा भविष्यति का गतिर्भविष्यति क्व सा गमिष्यति किं करिष्यति चेति । परं सत्कुलसंभवंमन्यानां पण्डितंमन्यानामबलात्मपत्नीपरितर्जनेनैव सबलंमन्यानामधन्यानां तेषां हृदयालवालेषु कुतः स्वप्नेपि तादृशसद्विचाराङ्कुरोप्युत्पद्येत । किंच लालिता सैव लक्ष्मीः स्यात्ताडिता सैव चण्डिकेत्युक्तवता व्यासेन, दंपती यत्र

सस्नेहौ मिथस्तत्र श्रियः स्थितिरित्युक्तवता मार्कण्डेयेनापि स्वधर्मपत्न्यां सप्रेम्णा तदीयपालनलालनपोषणपरेण च भाव्यं भव्येन पुंसेत्याज्ञप्तम् । सापराधापि स्त्रीजातिरेव न प्रहारार्हा किं पुनः शरणागता धर्मपत्नी न प्रहारार्हेति वक्तव्यम् । तथापि ये केचन क्रोधावेशविवशा वा दुर्जनवचनरचनाधीना वा पिशुनपैशुन्यपरतन्त्रा वा निर्दयतरकुटिलकुलटाप्रेरणापराधीना वा अनेकविधमदावेशविधेया वा मूर्खतावशीकृता वा भ्रान्तिभूतावेशविवशाशया वा धर्मपत्नीं प्रहर्तुमुद्यतकरा भवन्ति वानरा इव नराधमास्तेभ्यस्त्रस्ता इव ह्रीश्रीधीकीर्तिकान्तिकामदुघाः प्रपलाय्य क्वापि दूरं प्रयान्ति, न पुनस्तत्समीपमप्युपसर्तुमिच्छन्ति । नैतावदेव परमेश्वरोऽपि निरपराधासु धर्मपत्नीषु यथाजातैर्वृथा जातैस्तैः कृतमश्लीलालापपूर्वंतर्जनताडनसाहसं न सहत एव । सहेत यदि कदाचित्परमकृपालुतया परमेश्वरः स्वां निष्प्रतिमां कृपालुतां महाशयतां पतितपावनतां चालोक्य तावन्मात्रमंहःसाहसं परं केचनातिपापिनः सहजयाऽमन्दमतिमन्दतया निर्दयहृदयतया कृतघ्नतया च न संस्मृत्य स्वां प्रतिज्ञां न विलोक्य स्वां कुलीनतां न विचार्य च स्वीयं कुलधर्मं जातिधर्मं ज्ञातिधर्मं पाणिगृहीतामपि स्वां धर्मपत्नीं परित्यजन्ति तेषामेतमपराधं न कदाचिदपीश्वरः सहते । ते खलु मूर्तां गृहलक्ष्मीमपसारयन्ति सकलाः संपदो निष्काशयन्ति मूर्तामलक्ष्मीमालिङ्गन्ति साधीन् व्याधीन् समाह्वयन्ति निखिलनरकद्वाराण्युद्घाटयन्ति समुपार्जयन्ति चैहिकामुष्मिकाश्रेयःसंचयं ये निरपराधां स्वां धर्मपत्नीं परित्यजन्ति । लोकापवादभीरुणा श्रीरामचन्द्रेण निरपराधलेशाया महासत्याः सीतायाः परित्यागेन, कलिकालावेशविवशाशयेन नलेन च निरपराधाया महासत्या दमयन्त्याः परित्यागेन कीदृशानि दुःखान्यनुभूतानीति न केषां विदितम् । विनापराधं परित्यक्तानां धर्मपत्नीनां दीर्घदीर्घा निःश्वासमरुतो न केषां तूलपुञ्जानिव पुण्यपुञ्जानुड्डापयन्ति स्फाराः स्फारा अश्रुधारा न केषां चित्राणि सुचरित्रचित्राणि क्षालयन्ति करुणकरुणानि रुदितानि न केषां निसर्गचञ्चलां

गृहलक्ष्मीं मृगीमिव त्रासतरलां कुर्वन्ति हृदयान्तरेऽहर्निशं प्रज्वलितो विरहज्वलनो न केषामायुर्बन्धान् भस्मसात्कुर्वन्ति नानादुःखदहनोत्कथ्यमानमानसनिःसृतः शापतापश्च न केषां कुलीनतालतां म्लापयति न केषां कीर्तिं कालिमानमानयति न केषां कान्तिं सकलङ्कां करोति न केषां कल्याणपरम्पराश्च पराभावयति ! अगण्यपुण्यकारिणामपश्चिमेन विपश्चिदभिधानेन वसुधाधिनाथेनाप्यनुभूतं स्वधर्मपत्नीपरित्यागजन्यागःफलमागमोक्तमखिलं संयमिन्यामित्युक्तवता महर्षिमण्डलकमलखण्डमार्तण्डेन भगवता मार्कण्डेयेन, दंपत्योर्यत्र कलहस्तत्र यक्ष्मन् तवाश्रय इत्युक्तवता भगवता कमलसंभवेन, लालिता सैव लक्ष्मी स्यात्ताडिता सैव चण्डिकेत्युक्तवता भरतभूमिभूषणेन वैरिवर्गयशःसरोवरशोषणग्रीष्मेण भीष्मेण च पुरुषैः स्वधर्मपत्नीषु कथं वर्तितव्यमित्युपदिष्टमेव । तथापि प्रियस्वसारो मे ! यथास्माकं मातृचरणाः पितृचरणाश्च स्वधर्मानुसारेण वर्तन्ते नवेति न विचार्य सत्पुत्रैस्तु स्वधर्मानुसारेणैव वर्तितव्यं यथास्मद्गुरुचरणाः स्वधर्ममनुसरन्ति नवेति न प्रगणय्य सच्छिष्यैस्तु न कदाचिदपि स्वधर्मात्प्रमदितव्यम् यथास्माकं स्वामिनः स्वामिधर्मं पालयन्ति नवेति न कृत्वैव मनसि सद्भृत्यैस्तु स्वधर्मो यावज्जीवं परिपाल्य एव यथास्माकं राजा राजधर्ममवलम्बते न वेति नालोक्य सत्प्रजाभिस्तु स्वधर्मावलम्बनं न क्षणलवमात्रमपि परित्याज्यं यथाचास्माकं ज्येष्ठबन्धवो ज्येष्ठबन्धुधर्मधुरं वहन्ति न वहन्ति वेति नालोच्य कनिष्ठबन्धुभिस्तु स्वधर्मधूर्वहने निष्क्लेशलेशैरेव भाव्यं, तथैवास्माकं पतिः पतिधर्मपाल न परायणान्तःकरणो वर्तते न वेति न चेतसापि चिन्तयित्वा सत्कुलसंभवाभिः पतिव्रताभिस्तु 'पातिव्रत्यात्मकात्मधर्मपरिपालनपरायणान्तःकरणाभिरेव भाव्यम् । प्रियस्वसारो मे ! भवत्वस्मास्वस्माकं पतिः सप्रेमप्रसरो मा भवतु वा करोतु नः पालनलालनपोषाणानि मा करोतु वा समाचरतु नः प्रियहितानि माचरतु वा पालयतु प्रज्वलज्ज्वनसाक्षिकं कृताः स्वाः प्रतिज्ञा मा पालयतु वा वा

समुपनयतु नः स्वविश्वासपात्रतां मोपनयतु वा पश्यतु नः प्रेमपीयूषपूर्णया दृशा मा पश्यतु वा समालापयतु नः सुधामधुरया गिरा मालापयतु वा गणयतु नस्त्रिवर्गसहचरींमागणयतु वा समर्पयत्वस्मभ्यं मानं मार्पयतु वा समनुभावयतु नः संसारसुखानि मानुभावयतु वा किंबहुना वर्ततां शास्त्रोक्तस्वधर्मानुसारेण मावर्ततां वा तथाप्यस्माभिस्तु स एव प्राणप्रियः स एव संसारसर्वस्वं स एव जीवितसर्वस्वं स एव च परमं दैवतं मन्तव्यो नैतावदेव निष्कपटमनोवाक्कायकर्मभिः परमेश्वरस्येव तस्यैव सेवा विधेया। तदीयगुरुजनेषु तीर्थबुद्धिभिस्तदीयार्यसोदरेषु पितृबुद्धिभिस्तदीयकनिष्ठसोदरेषु पुत्रबुद्धिभिस्तदीयार्यस्वसृषु श्वश्रूसमानमानाभिस्तदीयानुजसोदरीषु च पुत्रीनिर्विशेषबुद्धिभिर्भाव्यम् । स्वकीयप्राणार्पणेनापि तस्यैव प्रियं हितं चाचरणीयम् । किंबहुना चतुरशीतिलक्षजन्मनामन्ते प्राप्तस्यास्य नारीवपुषः परमं श्रेयस्तु प्रतिवासरं प्रतिप्रहरं प्रतिघटिकं प्रतिकलं प्रतिक्षणं प्रतिनिमेषोन्मेषं च रचितया पतिचरणपरिचर्यया पतिप्रियहिताचरणेन पतिविरचितपवित्राज्ञानुसरणेनैव च भवति यतः पत्नीनामैहिकामुष्मिकश्रेयस्करः परमेश्वरः प्राणेश्वरः प्राणेश्वरः प्राणेश्वर एवास्तीति चरमं वच उच्चारयन्त्येव चन्द्रप्रभा निजपतिविरहासह्यदुःखस्मरणेन गलदविरलाश्रुसलिलाकुललोचना सरोमाञ्चगात्रप्रपञ्चागद्गदगला च मूर्छया निपपात । पतितां च तां प्रियसखीं विलोक्य प्रियस्वसारो मे ! न प्रमदितव्यं निखिलनिःश्रेयसनिदानाद्विद्यादानादिति मे चरमा प्रार्थनेत्युक्त्वा प्रियंवदापि मूर्छामगच्छत् । चन्द्रप्रभाप्रियंवदयोरीदृशीं दशां विलोक्य व्याकुलांतःकरणान्गुरुजनान्समाश्वास्य देवकन्याभिर्मुनिकन्याभिर्विद्यार्थिभिश्च विरचितैरनेकैरुपचारैः किंचिदास्थाय स्वास्थ्यं चन्द्रप्रभाप्रियंवदे समुन्मीलयामासतुर्मूर्च्छामीलितं लोचनयुगलं यावत्तावददूरवर्तिनो गिरेर्गुहामुखान्निःसृतान्दयामृतमयाशयावयि मातापितरौ नः श्रीमतां पुण्यप्रभावाच्छ्रीमहेश्वरप्रसादाच्च मुक्ता वयं पापशापसंतापसमूहादिति वदतो गुरुजनचरणेषु लुठतो निःसीमहर्षप्रकर्षपरतन्त्रैश्च

गुरुजनैः सानन्दाश्रुधारासारपातमाश्लिष्यमानान् शत्रुशल्यसत्यशीलचित्रसेनान्विलोकयामासतुः । विलोक्य च वत्से चन्द्रप्रभे ! वत्से प्रियंवदे ! वत्सा देवकन्याश्च ! फलितमिदानीं युष्माकमनन्यसमानं विद्यादानम् । धन्यं धैर्यं धन्या श्रद्धा धन्या गुरुभक्तिर्धन्या पतिभक्तिर्धन्या च वः परमेश्वरप्रविष्ठा निष्ठेति मुहुर्मुहुर्गुरुजनैर्मुनिपत्नीभिश्च सानन्दाश्रुसलिलपातं समर्पितधन्यवादाश्चन्द्रप्रभाप्रियंवदादेवकन्यास्तु निजनिजपतिवदनावलोकनसमकालसमुच्छलदमन्दानन्दसन्दोहावेशविवशाशया । हर्षाश्रुवर्षप्रकर्षान्प्रवर्तयन्त्यो लोचनयुगलैः किंकर्तव्यताजाड्यं वहन्त्योतिसंभ्रमभ्रमितमतिमत्यो भूताभिभूता इव मूकाइव मूढा इव बधिरा इव च निजनिजहृदयदयितवदनेन्दुमंण्डले कीलितामिव मग्नामिव निबद्धामिव च दृष्टिं न पुनः प्रत्यावर्तयितुं प्राभवन् । शत्रुशल्यसत्य शीलचित्रसेनाश्च निजनिजहृदयदयितावद नावलीनो दृशो निर्वर्तयितु नाशक्नुवन् । किमयं स्वप्नः किमियं माया किमिदं किमपीन्द्रजालं वा कुत एतादृशामन्दानन्दानुभवभाजनतास्माकमथवा भगवतस्तस्य फलितमिदानीं महामुनेर्वचनमित्यनेकवितर्कदोलालोलाशयाः क्षणमभवंश्चन्द्रप्रभादयो यावत्तावदेव गगनाङ्गणादवतीर्य कोऽपि मुनिवर्यो वत्से चन्द्रप्रभे ! वत्से प्रियंवदे ! वत्सा देवकन्याश्च ! सोहं वो जन्मत्रयाकलिताखिलकृत्यसाक्षी भगवतो भक्तवत्सलस्य चन्द्रचूडामणेराज्ञावश उग्रतपा परमेश्वरस्याज्ञयाऽत्रागतोस्मि । न किलैतदविदितं केषांचिद्यत्परमेश्वरः श्रीरोहिणीरमणशिरोमणिरेव सर्वासां विद्यानामधीश्वर इति । स खलु सहजया तयात्मनो दयामृतमयात्मतया जगति जनैर्विरचितं विद्यादानमात्मन आराधनमेव मन्यते । तत एवात्रभवतीभिर्भवतीभिर्विशुद्धया श्रद्धया वितीर्णं विद्यादानमपि भगवता श्रीशंकरेण स्वाराधनमुत्तमतमं मन्यमानेन संदिष्टमेतद्यद्भवत्साभिर्वितीर्णस्य विद्यादानस्य प्रभावेणैव बहुकालभोग्याभ्योपि यातनाभ्यो विमुक्ता युष्माकं पतयो राज्यसुखान्यन्वभवन्

पुनश्च शापप्रभावान्नीलमणिमयतामुपगतानां तेषां पुनरीदृशोत्तमदशादायिनी च विद्याप्रदानसंपदेव। भवतीनां सद्विद्यानामध्ययनमध्यापनं च परममाराधनं मे। सद्विद्याध्ययनाध्यापनसममन्यन्न ममस्वान्तसंतोषकरमखिलावनिवलयेऽपि तच्च भवतीभिर्विशुद्धया श्रद्धया सस्नेहप्रसरमद्यावधि परमादरेणाचरितं ततो यूयं सर्वा अपि स्वस्वस्वामिभिः सहेह सकलसंसारसुखसहस्राणि परमाभ्युदयसंपदमखण्डां सौभाग्यसंपदं निश्चलां सत्कीर्तिसंपदमुत्तमां च सत्पुत्ररत्नाभ्युदयसुखसंपदं चिरमनुभूयानुभूयान्ते तस्यैव सद्विद्यादानस्य प्रभावेण सहसहचरैः स्वैः स्वैरागत्य कैलासशैलाश्रममममुममनोवचोगोचराममन्दानन्दपरंपरामनुभविष्यथेत्युक्त्वा विरतवचसि मुनिवर उग्रतपसि सर्वेपि तच्चरणयोर्दण्डवन्निपत्योत्थाय च साञ्जलिबन्धं भगवन्! भवतामेवायं सर्वोपि प्रभावः। पूर्वस्मिन् जन्मन्यस्मिंश्च जन्मनि विद्यादानविधानमिदं भवद्भिरेवोपदिष्टम्। नामुमुपकारभारं यावज्जीवं विस्मरिष्यामः। प्रतिजन्म जन्मत्रयावधिरचितापराधानाप्यस्माकमपराधान्न विगणय्य श्रेय एव नः श्रीमद्भिश्चिन्तितम्। सकृदज्ञानतो भवादृशां कृतापराधलवो मानवो नाजन्मशतं श्रेयःपात्रतामधिगच्छति कुतः पुनर्जन्मत्रयावधि बुद्धिपूर्वं भूयोभूयः कृतापराधानामस्माकं श्रेयःप्राप्तिसंभवः स्यात्। सत्यपि तथा कथापथातीतेयं श्रेयःपरंपराप्तिः सदाशिवप्रसादोयं वरप्रदानं चैतद्भवतामेव महत्तां दयालुतामपकारपरेष्वप्युपकारपरम्पराकरणपरायणान्तःकरणतां च निष्प्रतिमां निवेदयति। निष्प्रतिमप्रणतवात्सल्यस्य भगवत आशुतोषस्य श्रीचन्द्रचूडामणेर्भक्तवात्सल्यं तु विश्वविख्यातमेव। तस्य तु परमेश्वरस्य प्रतिप्राणिजातं समुच्छलन्ति प्रतिप्रहरं प्रतिघटिकं प्रतिक्षणं प्रतिनिमेषोन्मेषं चोपकारपरंपराः। न जन्मनामयुतेन नियुतेन कोट्या वा तस्यानृण्यमुपगन्तुं शक्नोति कश्चिदिति निर्विवादम्। यादृशी दया दयालुना तेनास्मासु कृता न तादृशं किमपि विद्यादानं कृतमस्माभिः। विद्यादानकरणे कास्माकं वराकानां शक्तिः किं ज्ञानं कोऽनुभवश्च। केवलं सहजया स्वया

भक्तवत्सलतया स्वीकृतं यथाकथंचित्कृतमप्यस्माभिर्विद्यादानं परमेश्वरेण । तुष्यतु स आत्मनः प्रणतवत्सलतया तया । परं कतमया विधया भवत्कृतोपकारभारस्यानृण्यमुपयास्याम इति विचार्यमाणे न बोधपदवीमवतरति बुद्धिर्नः । कृपामृतप्रपायमानमानसा यूयमेव कुर्वंतु नः स्वकृतोपकारमहर्णादनृणान्नान्यः कश्चिदपर उपाय उपलभ्यत इत्युक्त्वा सर्वेऽपि पुनस्ते तत्पदयोर्न्यपतन् । महानुभाव उग्रतपा अपि तेषां शिरस्सु कमलदलकोमलं करं निधाय, निर्व्यलीकभक्तिभरपूर्णा अयि पुत्राः पुत्र्यश्च भक्त्यैव निष्प्रतिमयैतया यूयमनृणा मे तन्निश्चिन्तचित्तैर्भाव्यमेतद्विषये भवद्भिः। किंच वत्सया चन्द्रप्रभया देवकन्यया चानया विशुद्धया श्रद्धयाधिकतरं वितीर्णं विद्यार्थिभ्यो विद्यादानं तत्ताभ्यां त्वस्मत्तोऽपि कश्चिन्मनोभिलाषोवरणीय एवेत्युक्तवान् । तद्वचनविरामोत्तरक्षण एव भगवन् ! वरप्रदानानितुभवप्रदत्तान्यपि भवत्प्रदत्तान्येव मन्यामहे तथापि यद्याग्रहः श्रीमतां तर्ह्यभिलषणीयाशेषाभिलाषपूर्तिसिद्धिस्तु भवत्प्रसादाद्वितीर्णैव परमेश्वरेणापरं यानि यानि स्थानानि भगवतः शापप्रभावात् स्फटिकमणिमाणिक्यमणिनीलमणि मयान्यपि देवदानवमानवदुष्प्रवेशानि जातानि तानि तानि पुनः श्रीमतां प्रसादान्निःशापानि सकललोकसुरवरसेव्यानि संभवन्त्वेष एवावशिष्टो नावभिलाष इति सप्रणामप्रणयमुक्त्वा तूष्णीं बभूवतुश्चन्द्रप्रभादेवकन्ये । वत्से चन्द्रप्रभे ! वत्से देवकन्ये ! निरवद्यहृद्यविद्याप्रदानप्रभावेण परमेश्वरपात्रतामुपगताभ्यां भवतीभ्यां न किंचिदप्यदेयमिव पश्यामि तद्भविष्यन्ति भूयोऽपि भवप्रसादात्तानि तानि स्थलानि निःशापानि देवदानवमानवाद्यखिललोकसुखसेव्यानि च । तत्तत्स्थलनिवासजन्यानन्दमनुभूयानुभूय लोकैर्वितीर्णानामाशिषां फलानि च वत्साभ्यामेवानुभवितव्यानीत्युक्त्वा गगनाध्वना प्रयाणप्रणयी बभूव भगवानुग्रतपाः । प्रणामप्रणम्राश्च ते प्रयाणप्रणयिने तस्मै महामुनये समर्प्य प्रेम्णा प्रणामपुष्पाञ्जलीन् निजनिजवृत्तान्तनिवेदनपीयूषप्रवाहेण चिरविरह-

जन्यं संतापं शमयामासुः । शा
हपूर्णमानसो महाराजश्चन्द्रकीर्तिर्म
शुभेह्नि प्रशस्ते मुहूर्ते कल्याण्यां
त्यशीलचित्रसेनाभ्यां तन्मन्त्रिपदं
मन्त्रिणा मन्त्रिणामेकान्तसेव्यं तमे
यितुमाससाद । एवं सकलमपि
नन्दसुधासिन्धुमग्नमभूत्तद्वीक्ष्य
चानुवासरं तन्निमित्तं महोत्सवपरं
कलराज्यभारः समाप्य प्रजानुर
सह सह च चन्द्रप्रभाप्रियंवदा
गुरुजनसेवासुखेन कदा
त्स्फटिकमणिमयप्रदेशे शा
रिपालनलालनपरिपोषणप्रयत
ष्टपरमेश्वरप्रदत्तां सुखसंपदमनुभ
ते तपस्विप्रवरेणोग्रतपसा कृता
न्यसुमानमविरतमाचरन्तः प्रतिक्ष
प्रीत्या पर्याचरन्तः पराः श्रेयःपरम्

उक्त्वेति विश्रान्तवाग्विलासजा
भावेण सभामाभूषयतीनां सतीनां
मुखकमलेभ्यो धन्यवादकोलाहल
तस्मिन् कोलाहले निजासनादुत्थाय
त्योऽनसूयालोपामुद्राप्रभृतयो महास
माचलस्यैषा कुमारी वयसा बालापि
सद्विद्याधन्याभ्यः कन्याभ्य उत्तमत

भक्तवत्सलतया स्वीकृतं यथाकथंचित्कृतम तानीति न
तुष्यतु स आत्मनः प्रणतवत्सलतया त न्या भगव
भवत्कृतोपकारभारस्यानृण्यमुपयास्याम इति मयाज्ञप्ता स
वतरति बुद्धिर्नः । कृपामृतप्रपायमानमानसा यस्मिन्नारम्
पकारमहर्णादनृणान्नान्यः कश्चिदपर उपातृप्ति, सदुप
सर्वेऽपि पुनस्ते तत्पदयोर्न्यपतन् । महानुभाव ग कन्यारत्नस
कमलदलकोमलं करं निधाय, निर्व्यलीकभक्तिभ ालोक्यालोक
भक्त्यैव निष्प्रतिमयैतया यूयमनृणा मे तन्निश्चिन्त सहस्रार्पणं श्र
किंच वत्सया चन्द्रप्रभया देवकन्यया चानय प्रभातप्रायां
वितीर्णं विद्यार्थिभ्यो विद्यादानं तत्ताभ्यां त्वसमत्तो द्रप्रभाभ्युदय
एवेत्युक्तवान् । तद्वचनविरामोत्तरक्षण एव भगवन् ! व
ः कुल
न्यपि भवत्प्रदत्तान्येव मन्यामहे तथापि यद्याग्रहः श्रीम
भिलाषपूर्तिसिद्धिस्तु भवत्प्रसादाद्वितीर्णैव परमेश्वरेण
भगवतः शापप्रभावात् स्फटिकमणिमाणिक्यमणि ानायां श्रीपार्व
नवमानवदुष्प्रवेशानि जातानि तानि तानि पुन
सकललोकसुरवरसेव्यानि संभवन्त्वेष एवावशिष्ट
प्रणयमुक्त्वा तूष्णीं बभूवतुश्चन्द्रप्रभादेवकन्ये प्रेयः श्री-
कन्ये ! निरवद्यहृद्यविद्याप्रदानप्रभावेण परमेश्वरस्तु तुष्टः ।
किंचिदप्यदेयमिव पश्यामि तद्भविष्यन्ति क्षलक्ष्म्योः
स्थलानि निःशापानि देवदानवमानवाद्यखिल: प्रसादः ॥ १ ॥
त्स्थलनिवासजन्यानन्दमनुभूयानुभूय लोकैर्वि
वत्साभ्यामेवानुभवितव्यानीत्युक्त्वा गगनाध्व
वानुग्रतपाः । प्रणामप्रणम्राश्च ते प्रयाणप्रम्
प्रेम्णा प्रणामपुष्पाञ्जलीन् निजनिजवृत्तान्तनि